महः कापिलं साङ्ख्यतन्त्रे फणिभ्यामनन्यं च योगे विधौ छन्दसां च ।
कृतं सङ्ख्यया सर्वविद्यानिषद्यां यमाहुर्महीमण्डले पण्डितेन्द्राः ॥ १२ ॥

चार्वाकस्योक्तिरर्वागजनि समकुचद्बौद्धराद्धान्तभङ्गी-
भाट्टो हट्टो विनष्टो व्यरमदथ कथा पश्य पश्यत्पदस्य ।
योगोऽभूदस्तयोगस्त्रिजगति फणितिः कापिली सापि लीना
ध्वान्तश्च ध्वंसिताध्वा श्रुतिशिखरमतस्थापके भास्करार्ये ॥ १३ ॥
प्रतिद्वन्द्वसूरिच्छटावादकण्डूविलोपैकलीलाभृदन्तेवसन्तम् ।
उपन्यासधाटीविधूतामरेड्यं विजेतुं तमीष्टां विपश्चिद् व्रजे कः ॥ १४ ॥

सङ्क्षुद्य खण्डमसक्तृत्सिक्त्वा मधुना विधिः कवेरस्य ।
किं निरमिमीत रसनामिति माधुर्या यदुल्लसन्ति गिरः ॥ १५ ॥
माध्वी साध्वी न जज्ञे जगति परिणता गोस्तनी चास्तनीचा
न्यक्कारं शर्करागान्मधुरिमणि भृशं भिक्षुतां प्रापदिक्षुः ।
प्रक्षीणा क्षीरकाङ्क्षा समजनि मधुनो माधुरी चाधुरीणा
मोचाप्याचान्तदर्पा भणितिषु मखिनो भारतीख्यातिभाजः ॥ १६ ॥
यस्याऽदृष्टो नास्ति भूमण्डलांशो यस्याऽदासो विद्यते न क्षितीशः ।
यस्याऽसाध्या नास्ति विद्या किमन्यैर्यस्याकारः सा परा शक्तिरेव ॥१७॥

आ प्राचः कामरूपाद् द्रुहिणसुतनदप्लाविताादा प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवरचरितादा च सेतोरपाचः ।
आ केदारादुदीचस्तुहिनगहनतः पुण्यदेशानशेषां-
स्तीर्थान्यग्र्याणि पीठान्यपि च दिविषदां सैष साक्षादकार्षीत् ॥ १८ ॥

कामरूपात्परं नाम रूपाभिधं दृष्टवान्नीवृतं दूरतः केवलम् ।
पापभीरुर्यदा भूपतेरासते तत्र नार्यः पुमांसोऽपि दिग्वाससः ॥ १९ ॥
स एष गङ्गाधरवाजपेयिसकाशतः साधितगौडतर्कः ।
गङ्गावगाहाद्विरजाः पितॄणां गतोऽनृणत्वं सुकृती गयायाम् ॥ २० ॥

शिवभक्त्यामुपमन्युः शिवापदाब्जार्हणे हयग्रीवः ।
यः पुण्डरीकनयनोपास्ताविह जगति पुण्डलीकोऽभूत् ॥ २१ ॥
साचालोऽखिलतीर्थेष्वाचारो वृद्धिमान्प्रचारणया ।
आत्मविचारः सन्ततमव्यभिचारः शिवेऽस्य भावोऽभूत् ॥ २२ ॥
आनन्दी परिणिन्येऽसावानन्दीनामिकां प्रियाम् ।
सानन्दयन्मनो भर्तुर्मानं दत्त्वा तु पृष्ठतः ॥ २३ ॥
सावरणापत्रपया सालङ्कारा शुभेन शीलेन ।
सापत्या शिष्यैरपि साध्वीनां स्तूयते हि धुर्येषा ॥ २४ ॥

अन्तरङ्गमतयाऽथ तयासावन्तरङ्गविहृतिं विदधानः ।
पाण्डुरङ्गमभजत्सुतमाशाः पाण्डुरं गमयति स्म यशो यः ॥ २५ ॥
त्रयीमधीत्याधिगतार्थमेष त्रेतां यथाकालमथादधानः ।
आम्नायमाथर्वणमप्रचारमध्यैष्ट चाध्यापिपदग्रजातीन् ॥ २६ ॥

देवीभागवतं नाम पुराणं प्रोक्तलक्षणम् ।
आनीय प्रकटीचक्रे दानी पात्रेष्वदाम्भिकः ॥ २७ ॥
सारल्यशालिचेताः सारं श्रीरामभद्रचरितस्य ।
अष्टममद्भुतकाण्डं स्पष्टदशां प्रापयत्खिलीभूतम् ॥ २८ ॥
भासुरानन्दनाथाख्याभासुरो दीक्षया स्वयम् ।
पद्मावत्यम्बिकेत्याख्यां चकार सुदृशः सुधीः ॥ २९ ॥

शिवदत्तशुक्लचरणासादितपूर्णाभिषेकसाम्राज्यः ।
गुर्जरदेशे विदधे जर्जरधैर्यं स वल्लभाचार्यम् ॥ ३० ॥
वादे मस्करिणं माध्वं विधूयामुष्य बन्धुजाम् ।
पार्वतीं व्यवहृत्कीर्त्या समं सत्यप्रतिश्रवः ॥ ३१ ॥

आसृष्टेरनुवर्तमानमभितः श्वश्रूस्नुषाभावजं
वैमुख्यं परिहृत्य तादृशमिह स्वस्मिन्स्वकीयेषु च ।
अन्योन्यं कमलाविरिञ्चिसुदृशोरातन्वतः सङ्गतं
श्रीमद्भास्कररयज्वनश्चतुरता वाचा कथं वर्ण्यते ॥ ३२ ॥

काश्यां जज्ञे सोमपीथी यथावत्कालं कञ्चित्तत्र कृत्वा विहारम् (निवासम्) ।
शिष्यस्यासौ चन्द्रसेनस्य राज्ञः सेवातुष्टयोवास कृष्णोपकण्ठम् ॥ ३३ ॥

यादववंशैकमणिर्यो भोसलभूभृतां चमूनाथः ।
श्रीगुरुचरणोपास्तौ स्वयमेव प्रापदुपमितिं स्वस्य ॥ ३४ ॥
अनेकाग्रहारप्रतिष्ठागरिष्ठः शिवश्रीधराद्यालयोल्लासनिष्ठः ।
अजस्रप्रवृत्तान्नसत्रो वसिष्ठः स पूर्तानि चक्रे बहून्यार्तबन्धुः ॥ ३५ ॥
चक्रेशमस्थापयदेष काश्यां गम्भीरनाथं किल कोङ्कणेषु ।
मूलह्रदे श्रीमति पाण्डुरङ्गं वज्रेश्वरं नाम च सेतुबन्धे ॥ ३६ ॥
सन्नतिमान्नाथपदो सन्नतिनाम्नेह विश्रुते क्षेत्रे ।
चक्रे स मन्दिरं श्रीचक्राकारेण चन्द्रलाम्बायाः ॥ ३७ ॥
बहोः कालात्खिलाशेषमदो चोलेषु नीवृति ।
कहोलेशमसौ चक्रे महोत्सवनिरन्तरम् ॥ ३८ ॥
साध्वी तदग्रसुदती सह्यसुतातीरभूपरिष्कारे ।
भास्करपुरेऽग्रहारे बद्धावृति भास्करेश्वरं न्यधित ॥ ३९ ॥

यदि श्रीर्नो विद्या भवति यदि सा नैव विनयः
स चेन्नो दातृत्वं तदपि यदि न स्यान्मृदु वचः ।
इति स्मायं लोके नियतमसमानाधिकरणो
गुणग्रामः पूर्णो जगति ववृधे **भास्करबुधे** ॥ ४० ॥

नवस्यन्दिमाध्वीकधारानुकारप्रकारोल्लसत्साहितीसौहितीकः ।
विनिश्वासकल्पं भुवः कल्पशाखी बबन्ध प्रबन्धान्प्रबन्धासनैकात् ? ॥४१॥

दान्तेषु वर्यैर्वेदान्ते नितान्तेडितनैपुणः ।
अतनोदान्तनध्वान्तखण्डकं **चण्डभास्करम्** ॥ ४२ ॥

लीलामात्रेरितया नीलाचलपूर्वया चपेटिकया ।
विमतादृतं **प्रहस्तं** व्यतनिष्ट विहस्तमब्जनिभहस्तः ॥ ४३ ॥

पूर्वमीमांसकाग्रेसरैः श्लाघितः पूर्वमीमांसयोद्दामकक्ष्याकुलम् ।
**वादकौतूहलं** नाम चक्रे कृतिं वादकौतूहलीसूनुनासौ गुरोः ॥ ४४ ॥

**चन्द्रोदयं** च **भाट्टोपपदं** भट्टारकः प्रवीणानाम् ।
मध्यायाः कौमुद्या अपि टीकां **रसिकरञ्जनीं** विदधे ॥ ४५ ॥

प्रतिवादिशिरोघट्टकुट्टाकप्रतिभाभरः ।
तार्किकाणां मण्डनं स ततान **न्यायमण्डनम्** ॥ ४६ ॥

छन्दसि **सौत्रं भाष्यं छोटीवृत्तिं** प्रवृत्तिमान्धर्मे ।
**वार्तिकराजं वृत्तोपपदं चन्द्रोदयं** च चक्रेऽसौ ॥ ४७ ॥

वस्तुमर्हो धुरि सतां वस्तुतः पिङ्गलापरः ।
स स्तुतं प्राणय**च्छन्दःकौस्तुभं** विबुधोत्तमैः ॥ ४८ ॥

विद्वन्मनोनन्दनचन्द्रशालां यद्वत्प्रणिन्ये खलु **चन्द्रशालाम्** ।
प्रधीः कटोरीमपि लोभनीयपदार्थपूर्णामिह लब्धवर्णः ॥ ४९ ॥

**मधुराम्लं** व्यधात्काव्यं मधुराम्लरसप्रियः ।
सुभाषितं भास्कराङ्कं बभाषे मृदुभाषितः ॥ ५० ॥

प्रचण्डं दुरितव्रातखण्डने **शिवदण्डकम्** ।
**मुक्ताकानि** च पद्यानि मुक्तावद्यान्ययं जगौ ॥ ५१ ॥

तत्त्वज्ञः **स्मृतितत्त्वाख्यां** कृतिं सत्त्वगुणाश्रयः ।
**मर्मविद्धर्मशास्त्रस्य** कर्मठः सैष निर्ममे ॥ ५२ ॥

सहस्रब्राह्मणभुजिविधिखण्डस्य विश्रुतः ।
बौधायनप्रणीतस्य बुधो व्याख्यामरीरचत् ॥ ५३ ॥

शङ्खचक्राद्यङ्कनस्य स शङ्खलिखितोपमः ।
**प्रायश्चित्तं** जगा**देकादश्या** अपि **विनिर्णयम्** ॥ ५४ ॥

**प्रदोषभास्करं** चक्रे **तृचभास्करमप्यसौ** ।
**कुण्डभास्करसंज्ञां** च कृतिं भास्करपण्डितः ॥ ५५ ॥
नानाविधैरसौ **वृत्तैर्नाम्नामष्टोत्तरं शतम्** ।
अष्टमूर्तेरतिस्पष्टं व्याचष्टेस्म विशिष्टधीः ॥ ५६ ॥
**गणेशनामसाहस्रव्याख्यां** विख्यातिमान् गुणैः ।
**खद्योतनाम्नीं** निष्पाद्य व्यद्योतिष्ट स भास्करः ॥ ५७ ॥

स्कान्दीयं चन्द्रलाम्बायाश्चन्द्रोपममुखद्युतिः ।
**माहात्म्यं** ख्यातमाहात्म्यो व्याचख्यावतिविस्तृतम् ॥ ५८ ॥
मत्तप्रतिवदवदनप्रत्तजनानुत्तरत्वमुद्राकः ।
**नाथनवरत्नमालामञ्जूषां** मञ्जुलां जुगुम्फासौ ॥ ५९ ॥
**भावनोपनिषद्भाष्यं** सप्रयोगं स भाविकः ।
चक्रे **श्रीसूक्तभाष्यं** च चिरं परिचितः श्रिया ॥ ६० ॥

**कौलोपनिषद्भाष्यं** कुलजैः सेव्यो जनैश्चकारासौ ।
**त्रैपुरमहोपनिषदं** त्रैपुरसिद्धान्तविद्विवव्रे सः ॥ ६१ ॥
**ललितानामसाहस्रभाष्यं** भाष्यकृतां समः ।
**सौभाग्यभास्कराख्यं** स भाग्यलब्धं व्यधात्सुधीः ॥ ६२ ॥
सौभाग्यरत्नाकरभाग्यहेतुं **सौभाग्यचन्द्रोदयमागमज्ञः** ।
श्रीरामवन्निर्धुतपापबन्धं चकार चात्यद्भुत**सेतुबन्धम्** ॥ ६३ ॥

भास्करकुलजेन पुरा **बद्धः** सेतुः स्वयं तरितुमब्धिम् ।
**भास्कररायेण** जगत्तारयितुं भवपयोधिमयमरचि ॥ ६४ ॥
**वरिवस्यारहस्यं** च वरिवस्याप्रकाशकम् ।
वरिवस्यापरैरेव वरिवस्यमचीकरत् ॥ ६५ ॥
जामदग्न्योपज्ञकौलकल्पसूत्रस्य सूत्रवित् ।
**रत्नालोकाभिधां वृत्तिं** यत्नादेष विना व्यधात् ॥ ६६ ॥

**मालामन्त्रोद्धारं** गुणमणिमालापरिष्कृतोऽव्याख्यत् ।
**गुप्तवतीं सप्तशतीटीकामपि** लुप्तसंशयां विदधे ॥ ६७ ॥
सर्वज्ञो विशदां सप्तशतीमन्त्रविभाजिकाम् ।
प्रणिनाय **शतश्लोकीं** पुण्यश्लोकपदोचितः ॥ ६८ ॥

असङ्ख्याता हि कृतयः सङ्ख्याता अपि विष्टपे ।
सङ्ख्यातुं केन शक्यन्ते सङ्ख्यावच्चक्रवर्तिनः ॥ ६९ ॥
तत्सर्वज्ञोपज्ञकानि प्राज्ञहृद्यानि कानिचित् ।
अद्याहमनवद्यानि पद्यानि प्रतिपादये ॥ ७० ॥

'श्रीरामं प्रति पुष्कराभिधमहायक्षेण वेदत्रय-
व्याख्यानावसरे विशिष्य कथितं श्रीविष्णुधर्मोत्तरे।
एतां धेनुमुपह्वयामि सुदुघामित्यृग्गतं **शङ्करा-
चार्यं** शिष्यचतुष्टयेन सहितं वन्दे गुरूणां गुरुम् ॥ ७१ ॥
वर्षेष्वतीतेषु शकेषु षट्सु तिष्येऽवतीर्णं भुवि शङ्करार्यम्।
शिष्यैश्चतुर्भिः सहितं शिवादिपारम्परीकावधिमानमामः ॥ ७२ ॥
हन्ताहन्ताहन्तान्तर्वाणिगणस्य तत्त्वभुवि रन्ता।
ध्वन्यध्वन्यध्वन्यः श्रीनरसिंहाध्वरी गुरुर्धन्यः ॥ ७३ ॥
साक्षाद् द्राक्षासमक्षापतदमृतझरीमाधुरी साधुरीति-
र्मल्लीवल्लीमतल्लीकुसुमपरिमलाखर्वगर्वापहन्त्री ।
भाषा येषामशेषा विनटदजजटाजूटसम्भ्रान्तगङ्गा-
तुङ्गत्वङ्गत्तरङ्गध्वनिमधरयते तान्नुमः **श्रीनृसिंहान्** । ७४ ।
विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः।
जगदम्ब तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका ॥ ७५ ॥
शिरःस्थशशलक्षणं त्रिपुरदैत्यसन्तक्षणं
दुरन्तविषभक्षणं सुरनिकायसंरक्षणम्।
नरीनरविलक्षणं रविकृशानुचन्द्रेक्षणं
स्मरार्दनविचक्षणं परशिवं भजेऽनुक्षणम् ॥ ७६ ॥
चायं चायं दुरितनिचयं सीदतां वक्त्युपायं
पायं पायं शमितकलुषं कार्ष्णमम्भोऽनपायम्।
ध्यायं ध्यायं विषयकटुतां भोश्चिरायोरुगायं
गायं गायं विहरत विभुं वेणुगोपालनाटचम् ॥ ७७ ॥
इदमहमोरुभयोरपि यदस्ति नियतावभासकं भानम्।
तस्यापि साक्षिणी चित्तदुपाधिविनाकृताप्यस्ति ॥ ७८ ॥
तद्वत्तैश्वर्यभाजः परमशिव कथङ्कारमन्यानमर्त्यान्
याचे देहीति विष्णुद्रुहिणहरिमुखान्भिक्षुकान्भिक्षुकोऽहम्।
यत्तावद् द्वादशाहक्रतुविकृतिशतोक्थ्याङ्गभूतोऽपि चोक्थ्यो
ज्योतिष्टोमोक्तधर्माननभिलषति न तु द्वादशाहोक्थ्यधर्मान् ॥ ७९ ॥
आलोलोच्यकि सूरिसम्प्रतिपनीपन्नांश्चनीकारयन्
शब्दान्संसदि बम्भणीतकितरां यश्चर्करीतानपि।
कीर्तिस्तस्य वरीवधीतकि जनाः सर्वेऽपि चाकत्थति
स्वर्गं चाभिपनीपदीतकि न चैत्तेभ्यः सनीस्रस्यते ॥ ८० ॥
भ्रश्यत्कूलकुकूहनाय हरिणा जाल्मत्वमध्यावितान्
धिग्दण्डाजिनिकान्धकिद्धकिदिहायश्शूलिकान्पार्श्वकान् ।

ब्राह्मात्मैक्यपरोनुयोनुरहसं यायावरः सस्यको
मर्त्यत्रा समयाकरोति विधिवत्तेनास्त्वजयं मम ॥ ८१ ॥
द्रव्याश्रयी गुणोऽथ च दुःखध्वंसो विमुक्तिरिति च मुनिः ।
ऋतमाह गौतमोऽसौ त्रिभुवनमपि साक्षि यदिह सानुभवम् ॥ ८२ ॥
द्वित्रप्रस्तरखण्डगर्भकुतुपध्वानभ्रमाधायिवाक्
चेद्वैयाकरणो मनागपि रसं काव्यस्थितं विन्दति ।
तन्वाने रसितार्भटीं गतरसां मध्ये नभः शारदे
निर्घातैर्बधिरीकृतश्रुतिपुटे को वापराधोऽम्बुदे ॥ ८३ ॥
शुष्कोदर्ककुतर्ककर्कशगिरा चोद्यानि ये कुर्वते
साहित्येऽनुभवैकगोचररसे स्युस्तेऽपि चेत्पण्डिताः ।
को मन्तुर्महिलां निहत्य कुचयोरन्त्राणि सम्प्राश्नतां
वृक्षाणां कुसुमानि मर्दितवतां शाखामृगाणामपि । ८४ ॥
वित्ते तत्पुरुषे तु तत्पुरुषति त्वन्नाम्नि शैवाग्रणी-
रल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक् ।
श्रीरामेश्वरकर्मधारयमुनीकुर्वन्कविर्भास्करः
कस्मादण्वपि कर्म धारयति न द्वन्द्वेऽपि निर्द्वन्द्वति ॥ ८५ ॥
कावेरी त्वं सरस्वत्यनवरतसमाविष्टचित्ता तथाहं
न क्रोधस्ते ममापि त्वमहमपि कवेरात्मजत्वं प्रपन्नौ ।
भूमि न्यश्चत्कबन्धा त्वमहमपि यदा जीवनं पातुमीहे
त्वं मे पातुं तदिच्छस्यनिरतगुणयोरावयोः को विशेषः ॥ ८६ ॥
'गयाप्रयाग'द्वितयं वैपरीत्येऽपि तादृशम् ।
'काशिका'पि तथैवातस्त्रिस्थली स्तूयते बुधैः ॥ ८७ ॥
त्वद्भालेऽग्निशिखालेपात्तद्भालेऽग्निशिखा भवेत् ।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ८८ ॥
तवाङ्घ्रौ यः प्रणिपतेत्तस्याङ्घ्रौ निपतस्यहो ।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ८९ ॥" इति ।
जायात्मजाभ्यां च विधीश्वराभ्यां विष्णोः समाहारयुगं निबद्धम् ।
अस्तीह ते विन्दति शाब्दिकस्तादिति प्रतिज्ञा कविभास्करस्य ॥ ९० ॥
नस्याच्चेदिति वाक्यस्य कोऽर्थः कस्मिन्पिकभ्रमः ।
आन्ध्रीगीर्वाणभाषाभ्यामेकमेवोत्तरं वद ॥ ९१ ॥ (काकपोते) ।
कमले कमलोत्पत्तिः श्रूयते न च दृश्यते ।
दृष्टं शम्भोः पदाम्भोजे विष्णुलोचनपङ्कजम् ॥ ९२ ॥
मर्त्य- मर्त्यां गिरिं शुल्बं शब्दशास्त्रं च वर्णय ।
कविभास्कर एवात्र ब्रूते धातुगुणास्पदम् ॥ ९३ ॥

वीर श्रीकामरूपक्षितिरमण यशोनाशिना नायकेन
त्रैलोक्ये श्वेतिमानं कलयति यमुनाप्यत्यजन्नैजरूपम् ।
सन्दिग्धस्तीर्थराजोऽप्यभवदथ पुनः सा नदी त्वत्प्रतापा-
दामूलाग्रं यथावत्समजनि यवनीसङ्गदुङ्नीतिपूरैः ॥ ९४ ॥
प्रस्तौमि प्रतिहार्येव जनैरुद्गीयतेऽखिलैः ।
निधनोपद्रवैर्हीनं साम तेऽन्यादृशं नृप ॥ ९५ ॥

रुद्रभूप भद्रमस्तु यद्रिपूनुपद्रवैरिह द्रुतं प्रविद्रवय्य काद्रवेयपूर्दरीम् ।
तद्रमाविनिद्रणेन मुद्रिता दरिद्रता दरिद्रतान्तदद्रिभिद्वनद्रुमान्नचाद्रिये ॥ ९६ ॥
श्रीभास्करेणैव भुवि स्थितानि छत्राणि सर्वाण्यधरीकृतानि ।
छायां त्वदीयामभिवाञ्छतिस्म श्रीभास्करश्छत्रपतिस्ततस्त्वम् ॥ ९७ ॥
भोः पद्मपत्र भवता यदपां कणोऽपि न स्पृश्यते समुचितैव परस्वभीः सा ।
एवं धिया त्वयि धृते निहते सति त्वमाषाढभूतिनिवृतद्गिलसीति युक्तम् ॥ ९८ ॥

कूपाकूपारकुल्यास्वथ च नदनदीखेयकासारवापी-
ष्वापातालं प्रविष्टैर्दशशतगुणितैरंशुभिर्वारि भूरि ।
ग्राहं ग्राहं निषिञ्चन्नवसि दिनपते विश्वमेतत्समस्तं
तं ते किं वर्णयामो निरुपधि करुणां दानशौण्डयं च भूयः ॥ ९९ ॥
भूषावानखिलैर्गुणैः स्वकृतिभिः सन्तानवान्भूयसा
विद्याभिर्धनवान्सुधाधवलया कीर्त्या चिरं देहवान् ।
पित्रा दैवतवानभूत्सुकृतवाँल्लोकोपकारेण यः
साधर्म्यं लभतामनेन भुवि कः **श्रीभारतीयज्वना** ॥ १०० ॥

**श्रीमद्भास्करराय** नैकजनिषु त्वद्दानतोयैर्भृता-
दासगं जलधेरवाप्तजनुषः स्वःशाखिनो गोश्च सा ।
औदार्यं भजते हि कारणगुणा-कार्येषु न स्युः किमि-
त्येनं पूर्णमनोरथा प्रतिदिशं सर्वेऽर्थिनोऽप्यस्तुवन् ॥ १०१ ॥
नाद्रुह्यत्कस्मा अपि नास्मार्षीच्चेतसापि परदारान् ।
नास्पृहयत्परराये **भास्कररायो** मखी धन्यः ॥ १०२ ॥

अदीधरच्चेतसि चान्द्रचूडमन्त्रीभरद् बन्धुजनं स दीनम् ।
अचीकरत्किञ्च मखानशेषानतीतरत्संसृतिमात्मभक्तान् ॥ १०३ ॥
पद्मोल्लासैकहेतुर्निखिलकुवलयस्यापि मोदप्रदायी
लोकालोकोदरैकोदयमथ परतोऽप्यस्य देदीप्यमानः ।
अह्नयेव प्रोज्जिहानं दिनमनु च निशा द्योतमानः प्रकाशं
तिग्मांशोर्नातिशेतां कथमिव सुमहान्**भारतीयः प्रकाशः** ॥ १०४ ॥

**श्रीमद्भास्कररायय**ज्वतिलकस्योच्चैर्यशःस्रोतसः
पात्रं दिग्वलयान्तरालमभवद्वैरोध्रसी रोदसी ।
अश्मानन्ति कुलाचला जलधयः सप्तह्रदन्त्यैन्दवं
बिम्बं कम्बवतीह नूनमुडवः शम्बूकगुम्भन्ति च ॥ १०५ ॥
निर्यातीव पदाम्बुजान्मधुरिपोः सौतीव पद्मालयां
वेवेक्तीव पयोम्बुनी विहरति स्रष्टुर्मुखाब्जेष्विव ।
किञ्च स्मेरयतीव कैरववनीं द्विष्टे करीन्द्रानिव
क्ष्मां मूर्ध्नेव बिभर्ति कीर्तिरमला **श्रीभारतीयज्वनः** ॥ १०६ ॥
हीरति काञ्च्यां हारति चोलतटेऽङ्गेषु चन्दनाम्बवति ।
कुन्दति कुन्तलदेशे कीर्ति**र्गम्भीररायतनयस्य** ॥ १०७ ॥
कीर्त्या यस्य जगत्त्रये धवलिते सर्वे गजाः स्वर्गजाः
किञ्चोच्चैःश्रवसो हया नृपतयः सर्वेऽपि सीरायुधाः ।
नद्यः स्वःसरितोऽखिलाः फणभृतो दर्वीकराधीश्वराः
शैला हन्त हिमालया ववृतिरे सर्वे सुराः शङ्कराः ॥ १०८ ॥
कुमुदं वर्धयन् पद्मोल्लासी कोऽप्येव **भास्करः** ।
दुन्दुभिं ध्वनयन्नुर्व्यां प्रमोदी दिनमानशे ॥ १०९ ॥
वयसि चरमे लब्ध्वा सह्याद्रिजातटगेहितां
विदितनिखिलत्रय्यन्तार्थं चिदैक्यविभावनात् ।
महिममहति क्षेत्रे मध्यार्जुने शिवतां गतो-
ऽप्यमलवपुषा कीर्त्या जागर्ति शाश्वतिकेन सः ॥ ११० ॥
अन्येन्द्रं जगदस्थितेन्द्रमपि वा कर्तुं प्रगल्भेऽन्वये
सम्भूतो ननु बालकृष्णसचिवोत्तंसस्य रूपान्तरम् ।
लक्ष्म्यम्बाहृदयाम्बुधेर्हिमरुचिः प्राज्ञैः प्रशस्यामिमां
प्राणैषीत्सुमतिर्यथामति जगन्नाथाभिधानः कृतिम् ॥ १११ ॥
अब्दे प्रमोदसचिवे शब्दार्थपरिष्कृता कृता कृतिना ।
**भास्करविलाससंज्ञा** भायाद्भुवने कृतिश्चिरायैषा ॥ ११२ ॥
अनेन वागध्वरेण समाराद्धा कथञ्चन ।
दयतां देशिकात्मा मे देवी श्रीललिताम्बिका ॥ ११३ ॥

**इति श्रीविश्वामित्रमहर्षिगोत्रपयोधिकैरवमित्रस्य श्रीमद्भास्करराय-भारतीदीक्षिताग्निचिदन्तेवासिना सनाथस्य जगन्नाथस्य कृतिर्भास्करविलासकाव्यमिदं भुवनाभोगाख्यातं सम्पूर्णतामयासीत् ।**

---

॥ श्रीः ॥

# ललितासहस्रनाम

## भास्कररायप्रणीतसौभाग्यभास्करभाष्योपेतम्

### उपोद्घाताख्या प्रथमा कला

**श्रीललिताम्बायै नमः**

**श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे**
**विद्याष्टादशकस्य मर्मभिदभूद्यः श्रीनृसिंहाद् गुरोः ।**
**यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्**
**स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥१॥**

वह जिसका जन्म विद्वान गम्भीर के पुत्र के रूप में कोनमाम्बा के उदर से हुआ, जिसने अपने गुरु नृसिंह के माध्यम से अठारह विद्याओं का सम्पूर्ण ज्ञान प्राप्त किया तथा श्री शिवदत्त शुक्ल ने जिनका पूर्णाभिषेक (श्रीविद्या की पूर्ण दीक्षा) किया उनका तीन पवित्र अग्नि, तीन पुर, और तीन वेदों में पूर्ण विश्वास था। तीन अग्नि के रूप में आशय गम्भीर (पिता), नृसिंह (विद्या गुरु) और शिवदत्त (दीक्षा गुरु) से है।

**गुरुचरणसनाथो भासुरानन्दनाथो विवृतिमतिरहस्यां वीरवृन्दैर्नमस्याम् ।**
**रचयति ललिताया नामसाहस्त्रिकाया गुरुकृतपरिभाषाः संविवृण्वन्नशेषाः ॥२॥**

भास्कर राय का दीक्षा नाम भासुरानन्द नाथ था। अपने तीनों गुरुओं से रक्षित भासुरानन्दनाथ ललिता के इन सहस्र नामों का भाष्य करते हैं, जो अत्यन्त रहस्यपूर्ण हैं एवं जिन का उच्चारण आदरपूर्वक किया जाता है। भाष्य में गुरु द्वारा निर्धारित किए गए परिभाषा नियमों का पूर्णतया ध्यान रखा गया है।

**अष्टाभिर्वाङ्मयानामधिपतिभिरमोघोक्तिभिर्देवताभि-**
**र्मात्राज्ञप्ताभिरग्र्यं यदरचि ललितादिव्यनाम्नां सहस्रम् ।**
**यद्ब्रह्माणीरमेशप्रभृतिदिविषदां विस्मयाधानदक्षं**
**तत्रैकस्यापि नाम्नः कथमिव विवृतिं मादृशः कर्तुमीष्टे ॥३॥**

इन सहस्र नामों की रचना करने का आदेश सर्वप्रथम माँ ललिता ने स्वयं आठ

दिव्य एवं शक्तिशाली वाक् देवियों को दिया था। इन नामों की रचना पूर्ण हो जाने पर जब माँ ललिता ने इनको उन देवियों के मुख से उस अवसर पर सुना जब उनकी विशाल गोष्ठी में असंख्य देवता, दिव्यौघ, मानवौघ, सिद्धौघ तथा करोड़ों ब्रह्मा, और रुद्र उपस्थित थे। (श्लोक ३२ से ३६ तक इसकी विस्तृत चर्चा की गई है) इन नामों को सुनकर ब्रह्मा, विष्णु और रुद्र आदि सभी आश्चर्यचकित रह गये। ऐसी स्थिति में मुझ जैसा व्यक्ति इसके एक भी नाम का भाष्य कैसे कर सकता है।

तथापि श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काऽप्यन्यतमिका।
मदीयश्रीनाथत्रयचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति ममता सा मम मता ॥४॥

किन्तु फिर भी वाक् की एक देवी को, सृष्टि की सूत्रधार महामयी माँ ने प्रेरित किया है कि वे दहराकाश में संचरण कर मेरी उस जिह्वा के अग्रभाग पर नृत्य करें, जो उस जल से पवित्र है, जिसने मेरे तीन गुरुओं के चरण कमलों का प्रक्षालन किया है और मैं उस देवी को ही अपनी स्व-आत्मा मानता हूं।

आ प्राचः कामरूपाद् द्रुहिणसुतनदप्लाविताद् आ प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवररचितादा च सेतोरवाचः।
आ केदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥५॥

इह खलु निखिलपुरुषार्थसाधने भगवत्याराधनेऽत्यर्हिततमस्य रहस्यनाम-सहस्रकीर्तनस्य रहस्यतरसद्गुरुसंप्रदायैकवेद्यस्वरूपत्वेन तान्संप्रदायान् शिष्यानुजिघृक्षया विदर्शयिषवः श्रीमन्नृसिंहानन्दनाथनामानोऽस्मद्गुरुचरणाः निरन्तरनिरन्तराया अपि शिष्यशिक्षार्थं मङ्गलमाचरन्ति—

पूर्व में विद्वतजनों की अनेक मंडलियाँ उस कामरूप तक हैं, जिसे ब्रह्मपुत्र का जल सिंचित करता है, पश्चिम में गान्धार तक, जिसे सिन्धु नदी सिंचित करती है, दक्षिण में सेतु तक, जिसका निर्माण श्रीराम ने किया था तथा उत्तर में केदार तक, जहाँ हिम को भेद कर पहुँचना दुष्कर है। मेरे इस प्रयास से वे प्रसन्न हों। पशुवत् मूढ़ों को प्रसन्न करना तो असम्भव ही है।

भगवती आराधना ही एक मात्र ऐसा साधन है जिससे धर्म, अर्थ, काम और मोक्ष चारों पदार्थों की प्राप्ति हो सकती है। सहस्र नामों का पाठ उनकी सेवा में उपस्थित होने का सर्वश्रेष्ठ साधन है। महान् गुरुओं से इसका मार्गदर्शन लिया जा सकता है। मेरे श्रद्धास्पद गुरु नृसिंहानन्दनाथ ने अपने शिष्यों पर अत्यधिक प्रीति होने के कारण ही इन रहस्यों को प्रकाशित किया और इस मंगलाचरण श्लोक की रचना की। यद्यपि वे स्वयं इन सब कठिनाइयों से परे थे, फिर भी

उन्होंने अपने शिष्यों की कठिनाइयों और उनके हितों को ध्यान में रखकर ही ऐसा किया।

त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम्।
त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम्॥१॥

त्रिपुरेति। त्र्यात्मकं पुरं भूपुरं मण्डलकोणरेखामन्त्रादिसमूहो वा यस्याः सा त्रिपुरा। तदुक्तं कालिकापुराणे 'त्रिकोणं मण्डलं चास्या भूपुरं च त्रिरेखकम्। मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः। त्रिविधा कुण्डलीशक्तिस्त्रिदेवानां च सृष्टये। सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मते'ति। कुलस्य सजातीयसमूहस्य निधिं मातृमानमेयरूपत्रिपुट्या एकज्ञानविषयत्वेन साजात्यात्। घटमहं जानामीत्येव ज्ञानाकारात् 'जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग' दिति श्रीमदाचार्यभगवत्पादोक्तेः। तदेव हि कुलम्। 'सजातीयैः कुलं यूथ'मिति कोशात्। परमशिवादिस्वगुरुपर्यन्तो वंशो वा कुलम्। 'संख्या वंश्येने'ति पाणिनिसूत्रे वंशो द्विधा विद्यया जन्मना चे'ति महाभाष्यादाचारो वा कुलम्। 'न कुलं कुलमित्याहुराचारः कुलमुच्यते। आचाररहितो राजन्नेह नामुत्र नन्दती'ति भविष्योत्तरपुराणात्। सुषुम्नामार्गो वा कुलम्। कुः पृथिवीतत्त्वं लीयते यस्मिंस्तदाधारचक्रं तस्य शक्यस्य संबन्धात्। अरुणा रक्ता श्रीः कान्तिर्यस्यास्ताम्। कामराजेन कामेश्वराख्यपरमशिवेन विद्धं सामरस्यापन्नम् अङ्गं यस्याः। त्रिगुणैः सत्त्वरजस्तमोमयैर्देवैर्विष्णुब्रह्मरुद्रैः नितरां नुतां स्तुतां एकान्तां रहोदेवतां, एकां मुख्यां तां प्रसिद्धां वा अश्चासाविश्चेति कर्मधारये शिवकाम इत्यर्थात्तत्सुन्दरीं वा। 'अकारो ब्रह्मविष्णवीशकमठेष्वि'ति विश्वः। 'इकारो मन्मथः प्रोक्त' इत्यनेकार्थध्वनिमञ्जरी च। बिन्दुं सर्वानन्दमयं चक्रं गच्छतीति तथा। महान्ब्रह्माण्डादिरूप आरम्भो यस्यास्तामीडे स्तौमीत्यर्थः। अथात्रैव नामोद्धारः प्रदर्श्यते। त्रिपुरेत्यत्र पकार एकसंख्याया वाचको रेफस्तु द्वित्वसंख्यायाः। यदाह वररुचिः—'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः। नेञ शून्यं ज्ञयं तथा स्वरे केवले कथिते'ति। पिण्डान्त्यैरित्यस्य व्यञ्जनसमूहे चरम एव सांकेतिक इत्यर्थः। अङ्कानां वामतो गतिरिति न्यायात्पुरेत्यनेनैकविंशतिसंख्या कथिता भवति। एवमुत्तरत्रापि। तेन त्रि इत्याकारकपदारब्धानि नामानि त्रिनयनेत्यारभ्य त्रिकोणगेत्यन्तान्येकविंशतिरेवेत्यर्थः। निधयो नव 'नव ग्रहद्वारनिधिप्रजेशा' इति छान्दसीयवचनात्। कुलपदारब्धानि नामानि नव 'कुलामृतैकरसिके' त्यारभ्य कुलरूपिणीत्यन्तानि। अरुणाः सूर्या द्वादश। श्रीपदारब्धानि श्रीमातेत्यारभ्य श्रीशिवेत्यन्तानि। कामपदारब्धानि राजसंख्याकानि षोडश कामेशबद्धमाङ्गल्येत्यारभ्य कामकेलितरङ्गितेत्यन्तानि। विद्धाङ्गीं विइत्यक्षरारब्धान्येकोनचत्वारिंशत् विशुक्रप्राणहरणेत्यारभ्य विरागिणीत्यन्तानि। त्रिगुणैर्गुणनिधिर्गुणप्रिया गुणातीतेति त्रीणि। निनुतां

**निकारारब्धानि षष्टिः निजारुणेत्यारभ्य निरालम्बान्तानि। एकान्तां ताम्बूल-पूरितमुखीत्येकं नाम। बिन्दुगां बिन्दुमण्डलवासिनी बैन्दवासना बिन्दुतर्पण-संतुष्टेति त्रीणि। महारम्भां महापदारब्धानि द्विचत्वारिंशत् महालावण्येत्यारभ्य महेश्यन्तानि ॥१॥**

मैं उन त्रिपुरा की स्तुति करता हूँ जो कुलनिधि हैं, जिनका वर्ण रक्ताभ है, जिनके शारीरिक अवयवों की शोभा कामराज के समान है, तीनों गुणों के तीनों देवता जिनका सदैव स्तवन और वन्दन करते रहते हैं, जो रहस्या (एकान्ता) हैं, बिन्दु जिनका निवास स्थान है और जो समस्त ब्रह्माण्ड की प्रकाशिका हैं।

**त्रिपुरा**—वे हैं जिनके तीन पुर हैं, अर्थात् वृत्त, कोण, रेखाएँ और मन्त्र आदि। कालिका पुराण का कथन है 'उनके तीन कोण, तीन वृत्त और उनका भूपुर त्रिरेखात्मक है।' उनका मन्त्र त्रि-अक्षरी है और उसके रूप भी तीन ही हैं। कुण्ड-लिनी शक्ति भी तीन मुखी है, जिससे वह तीन देवों का सृजन करती है। और क्योंकि वह सभी स्थानों में त्रिधा है अतः उन्हें त्रिपुरा कहते हैं।'

**कुलनिधि**—कुल का अर्थ है परिवार या गण। निधि का अर्थ है कोषगृह, वे निधि और कुल की ज्ञाता, ज्ञेय और ज्ञान की परिणामस्वरूपा हैं क्योंकि ज्ञान तभी अस्तित्व में आता है जब कोई कहता है, 'मैं इस घट को जानता हूँ।' श्री शंकराचार्य का कहना है "जब कोई कहता है, 'मैं जानता हूँ' कि समस्त ब्रह्माण्ड उसकी ज्योति को प्रतिबिम्बित करता है।" कोश का कहना है कि कुल का अर्थ गण या जाति है। अथवा कुल का अर्थ आध्यात्मिक परम्परा से भी हो सकता है जो परम शिव से आरम्भ होकर अपने गुरु तक है। या, 'संख्या वंश्येन' इस पाणिनि-सूत्र पर, महा-भाष्य के 'वंश दो प्रकार का होता है—विद्या से एवं जन्म से' इस वचन से आचार (सदाचार) भी कुल कहलाता है। भविष्य पुराण में कहा गया है—'वंश को कुल नहीं कहते हैं, बल्कि हे राजन्, जिसका आचरण सत् नहीं है वह न यहाँ और न परलोक में सुखी होता है।' अथवा कुल का अर्थ है सुषुम्णा का पथ। 'कु' कहते हैं पृथ्वी तत्व को और 'ल' का अर्थ है लय कर लेना, अर्थात् कुल वह है जिसमें पृथ्वी का लय हो जाय अथवा समा जाय, इस प्रकार मूलाधार का केन्द्र भी कुल है। कहते हैं कुण्डलिनी शक्ति मूलाधार में सोती है। देवी का वहीं पर निवास है, अतः उन्हें कुलनिधि कहते हैं।

**त्रिदेव**—सत्त्व, रजस् और तमस् के देवता क्रमशः ब्रह्मा, विष्णु और रुद्र हैं।

**एकान्तां : एक**—अ+ई=ए। कर्मधारय समास के अनुसार अर्थ होता है शिवकाम—शिव की कामना करने वाली। विश्वकोश का कथन है, अ=ब्रह्मा, विष्णु, ईश और कच्छप। अनेकार्थध्वनिमंजरी के अनुसार 'इ' का अर्थ है मन्मथ अर्थात् काम या इच्छा।

**बिन्दु**—श्रीचक्र में नवें चक्र को सर्वानन्दमय चक्र कहते हैं। इसी से महा-

ब्रह्माण्ड के रूप आदि का आरम्भ माना गया है। यहीं से नामोद्धार प्रारम्भ किए गए हैं।

नामोद्धार किस प्रकार किया गया है, यहाँ पर इस को स्पष्ट किया गया है—त्रिपुरा, 'प' एक का प्रतीक है और 'र' दो संख्या का प्रतीक है। वररुचिः का कथन है, '**कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः**' व्यञ्जन समूह संख्याओं का प्रतीक है। उदाहरणस्वरूप 'क' एक, 'ख' दो, 'ग' तीन, आदि। स्वर 'अ' से 'अः' तक १६ और 'न' शून्य का प्रतीक है। गणना का क्रम दायें से बायें की ओर चलता है। निम्नलिखित समस्त शब्दों में इस क्रम का पालन करना चाहिए। इस प्रकार पुरा का अर्थ इक्कीस (२१) है। सहस्रनाम में इक्कीस नाम ऐसे हैं, जिनका प्रारम्भ 'त्रि' से होता है—त्रिनयना (४५३) से लेकर त्रिकोणगा (९८६) तक।

**कुलनिधि**—निधि शब्द नव (९) का प्रतीक है। छन्द के अनुसार, '**नव ग्रहदारनिधिप्रजेशाः**' निधि नौ (९) होती हैं। नौ (९) नाम ऐसे हैं जो 'कुल' शब्द से आरम्भ होते हैं। 'कुलामृतैकरसिके' (९०) से 'कुलरूपिणी' (८९७) तक।

**अरुणः**—सूर्य। यह बारह (१२) को इंगित करता है। श्री से जिन नामों का आरम्भ होता है उनकी संख्या बारह (१२) है। 'श्रीमाता' (१) से लेकर 'श्री-शिवा' (९९९) तक।

**कामराज**—काम से सोलह (१६) की संख्या का बोध होता है। राज संख्या सोलह मानी जाती है। ये नाम 'कामेशबद्धमाङ्गल्य' से आरम्भ होते हैं और 'कामकेलितरङ्गिणी' (८६३) तक (३०) आते हैं। इनकी संख्या सोलह (१६) है।

**विद्धाङ्गी**—'ध' नौ (९) का प्रतीक है और 'ग' तीन (३) का प्रतीक है। इस प्रकार यह संख्या उनतालीस (३९) हुई। 'वि' से आरम्भ होने वाले नामों की संख्या उनतालीस (३९) है जो 'विशुक्रप्राणहरणा' (७६) से आरम्भ होकर 'विरागिणी' (९३७) तक हैं।

**त्रिगुणैर्गुणनिधिर्गुणप्रियाः**—गुण तीन होते हैं। ये केवल तीन (३) नाम हैं—'गुणनिधि' (६०४), 'गुणप्रिया' (७२२) और 'गुणातीता' (९६१)।

**निनुताम्**—'न' शून्य का प्रतीक है और 'त' छः (६) का प्रतीक है। इस प्रकार 'नि' से प्रारम्भ होने वाले नामों की संख्या साठ (६०) है। ये नाम 'निजारुण' (१२) से लेकर 'निरालम्बा (८७७)' तक के बीच में आते हैं।

**एकान्ताम्**—केवल एक (१) ही नाम है जो ताम् से आरम्भ होता है—एकान्ता 'ताम्बूलपूरितमुखी' (५५९)।

**बिन्दुगां**—'गां' से तीन का आशय है। अतः तीन नाम 'बिन्दुमण्डलवासिनी' (३८०), 'बैन्दवासना' (९०५) और 'बिन्दुतर्पणसंतुष्टा' हैं (९०५)।

**महारम्भाम्**—महापद महारम्भा ४२ बयालीस का वाचक है। इस प्रकार

बयालीस (४२) नाम ऐसे हैं जो 'महा' से आरम्भ होते हैं। 'महालावण्या' (४८) से लेकर 'महेशी' (६३२) तक आते हैं और इनकी संख्या बयालीस (४२) है।

ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः।
परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥२॥

**छलाक्षरनामसूत्रेभ्यो नामविभागादेर्विलम्बेन क्लिष्टया ज्ञायमानत्वात्तत्रत्या एव परिभाषाः सुलभोपायेन सुबोधा इति विद्योपासकानां तोषाय कथ्यन्त इत्यर्थः। छलाक्षरसूत्राणां विलम्बितार्थबोधजनकत्वं तत्र तत्र प्रकटीकरिष्यामः ॥२॥**

छलाक्षर सूत्र की परिभाषा क्लिष्ट है फिर भी श्री विद्या के उपासकों के सन्तोष और प्रमोद के लिए संक्षेप में ही इसे स्पष्ट किया गया। छलाक्षर सूत्रों को परिभाषा से समझाने की भी चेष्टा की जाती है। छलाक्षर सूत्र कठिन हैं किन्तु परिभाषा से समझना सुगम हो जाता है। श्रीविद्या के उपासकों को कौल कहते हैं।

पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम्।
षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥३॥

**आदौ प्रथमभागे पञ्चाशदेकश्च। एकापञ्चाशच्छ्लोक इत्यर्थः। वक्ष्यमाणस्य सहस्रभोजनप्रयोगस्य बहुदिनक्रियमाणत्वपक्षे प्रथमदिन एकपञ्चाशच्छ्लोकपाठः। ध्यानश्लोकस्तु प्रत्यहं पठनीय इति वैषम्यध्वननाय विभज्य कथनम्। नामसु विषये द्व्यशीत्युत्तरं शतमर्धश्लोकश्च अन्ते फलश्रुत्यादिप्रकरणे। संहृत्य तु त्रीणि शतानि विंशतिश्च श्लोका इत्यर्थः ॥३॥**

सहस्रनाम के आदि अर्थात् प्रथम भाग में ५१ श्लोक हैं। इसे प्रस्तावना भी कहते हैं।

सहस्रनाम १८२½ श्लोकों में पूर्ण होते हैं। अन्तिम भाग फलश्रुति में ८६½ श्लोक हैं। इस प्रकार कुल ग्रन्थ में ३२० श्लोक हैं।

दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम्।
मुनिसूतहयाम्बाश्वाम्बाश्वोवितर्ध्यानमेकेन ॥४॥

**अथ प्रथमभागं विभज्य दर्शयति—भूः एकः। नृपालाः षोडश। अध्युष्टं सार्धत्रयम्। मुनिरगस्त्यः। हयाश्वपदानि हयग्रीवपराणि। दशश्लोका अगस्त्योवितरूपा इत्यादिरीत्या यथाक्रममन्वयः। अगस्त्याख्यो हि महामुनिः श्रीविद्योपासकाग्रेसरस्तत्रभगवतो हयग्रीवस्य देशिकेन्द्रस्य मुखाद् ब्रह्माण्डपुराणीयैर्मन्त्रन्यासपूजापुरश्चरणहोमरहस्यस्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्यतोऽपि परमरहस्यं नामसहस्रमस्तीति तपोबलादेव**

**निश्चित्य तद्भक्तायापि मह्यं किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे संदिहानः पृच्छतीत्याह भगवान् सूतः ।।४।।**

प्रथम भाग के इकावन (५१) श्लोकों का विभाजन इस प्रकार किया गया है। भूः एक, नृपालाः १६, अध्युष्टं ३$\frac{1}{2}$, अगस्त्य के १० (दस) श्लोक, सूत का एक (१) हयग्रीव के साढ़े सोलह (१६$\frac{1}{2}$), देवी के साढ़े तीन (३$\frac{1}{2}$), हयग्रीव के साढ़े नौ (९$\frac{1}{2}$), देवी के साढ़े नौ और अन्तिम ध्यान श्लोक है। इसी प्रकार क्रमशः इनके कथन को जानना चाहिए। यह एक प्रकार से सहस्रनाम की अनुक्रमणिका ही समझनी चाहिए।

महामुनि अगस्त्य ने इस प्रकार श्रीविद्या के भक्त उपासकों के लिए अपने गुरु हयग्रीव से मन्त्र, न्यास, पूजा, पुरश्चरण, होम, रहस्य, स्तोत्र आदि का ज्ञान जिस के वर्णन ब्रह्माण्ड पुराण के सात भागों में हैं, सर्वप्रथम प्राप्त किये। उन्होंने माता के प्रादुर्भाव आदि रहस्यों की भी जानकारी प्राप्त की।

बाद में उन्हें यह जानकर अत्यन्त क्षोभ हुआ कि उन्हें भक्त होते हुए भी उन सहस्रनामों तथा उनके परम रहस्यों को क्यों नहीं बताया गया जिनके अस्तित्व का पता उन्हें अपने तपोबल से लग गया था। गुरु ने सहस्रनाम और उनके परम रहस्यों को उन्हें क्यों प्रदान नहीं किया, अतः उन्होंने अपने गुरु हयग्रीव से इसका कारण पूछा।

अगस्त्य उवाच

अश्वानन महाबुद्धे सर्वशास्त्रविशारद।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ।।१।।

**न गच्छतीत्यगः पर्वतस्तं विन्ध्यानामानं स्त्यायतीत्यगस्त्यः। स्त्यानं स्तम्भनम्। सा च कथा काशीखण्डे द्रष्टव्या। असंगतत्वापनोदाय पूर्वकथाप्रसङ्गं सामान्येन स्मारयति—अश्वेति। देवीभागवते प्रथमस्कन्धे तावदियं कथा स्मर्यते। पुरा किल भगवान् विष्णुर्यज्ञसंरक्षणादिघनतरकार्यार्थं कृतबहुजागरः श्रान्तः शार्ङ्गधनुषः कोटिं ग्रीवयावलम्ब्य निद्राणोऽभूत्। तदा ब्रह्मरुद्रादयः कार्यविशेषसिषाधयिषया तज्जागरणाय वम्रिनामकक्रिमिभ्यो यज्ञभागमिच्छद्भ्यो दत्त्वा तन्मुखात्प्रत्यञ्चामत्रोटयन्। तेन कोटेरुच्चलनाच्छिरोत्युड्डिनं क्वापि गतमभूत्। ततः शोकाविष्टाः सुरास्तच्छीर्षमलभमानास्त्रिपुरसुन्दरीं तुष्टुवुः। सा तुष्टा सती हयशिरोयोजनेनैनं जीवयतेत्याज्ञाप्य भगवत्यन्तरधत्त। ततस्तथा जीवितो विष्णुर्हयग्रीवो भूत्वा हयग्रीवाख्यं दैत्यं हतवान्। रहस्यजातमखिलं देवीमुखादेव लब्धवानित्यादि। सोऽयमश्वाननो विष्णुरेव। तदिदं विशेष्यमुक्तवृत्तान्तस्मारणेन देव्यनुगृहीतत्वाभिप्रायगर्भम्। अतएव महाबुद्ध इत्यादिविशेषणद्वयं न स्तुतिमात्रम्। ललितेति। पद्मपुराणे हि 'लोकानतीत्य ललते ललिता**

तेन चोच्यत' इति निर्वचनश्लोके चकारादन्यदपि संभवं निर्वचनमनुमतम्। पराशक्तिसदाशिवादिरूपाणि शक्तिशिवयोरुत्तरोत्तरापकर्षवन्ति बहूनि सन्ति। तेषां च लोका अपि बहुविधाः। परशिवाभिन्नमहाशक्तिस्तु सर्वलोकातीता महाकैलासापराजितादिपदवाच्ये सर्वलोकोत्तमे लोके तिष्ठति। तस्याश्च शरीरं घनीभूतघृतवद्रजस्तमःसंपर्कशून्यशुद्धसत्त्वघनीभावरूपम्। अन्यासां शिवशक्तीनां कतिपयानां सात्त्विकशरीराण्यपि सत्त्वाधिक्यगुणान्तरात्पत्वयुक्तानि न पुनः शुद्धसत्त्वानि। अतः सर्वोत्तमैवेषा परब्रह्ममूर्तिः। अस्या अपि सन्ति रहस्यभूता बहवो भेदास्तेषु कामेश्वर्यात्मकमूर्तिरेवेह ग्रन्थे प्रतिपाद्येति ललितापदेन सूचितम्। ललितं शृङ्गारहावजन्यः क्रियाविशेषः तद्वती ललिता। तेन शृङ्गाररसप्रधानेयं मूर्तिरिति सूचितम्। सैव देवी क्रीडाविजिगीषादिशीलत्वात्। तस्याश्चरितं प्रादुर्भावादिस्तोत्रसमुदायान्तं कथितं भवतेति शेषः। परमाद्भुतं अत्युत्तमत्वात्पूर्वमश्रुतचरत्वादनुपमत्वाच्चेत्यर्थः ॥१॥

अगस्त्य ने कहा

समस्त शास्त्रों और विद्याओं में पारंगत हे हयग्रीव ! आपने देवी ललिता का आश्चर्यजनक इतिहास मुझे बताया।

अगस्त्य नाम 'अग' एक पर्वत से उद्भूत हुआ है जो चलता नहीं है, वह 'अग' है। उन्होंने विन्ध्य पर्वत का 'स्त्यान' कर दिया था। अर्थात् दृढ़ कर दिया था अतः अगस्त्य हुए। स्त्यानं को स्तम्भनं भी कहा जाता है। यह कथानक काशीखण्ड भाग १ के अध्याय ५ में आता है। इसी के साथ हयग्रीव (अश्वमुख) का भी प्रसंग है। यह प्रसंग देवी भागवत पुराण के प्रथम स्कन्ध में आता है जो इस प्रकार है: एक बार भगवान विष्णु दस हजार वर्षों तक दैत्यों से युद्ध करते रहे और फलस्वरूप वे विश्रान्त हो गये। तब वे उस पवित्र समतल स्थान पर ही शार्ङ्ग धनुष पर ग्रीवा रखकर सो गये। एक मान्यता यह भी है कि विष्णु भगवान दैत्यों से युद्ध नहीं कर रहे थे वरन् यज्ञ का संरक्षण कर रहे थे और उससे श्रान्त हो गये थे। विष्णु के कण्ठ का भार प्रत्यंचा चढ़े हुए धनुष की नोक पर पड़ रहा था। उन्हें गाढ़ निद्रा आ गई। इसी अवसर पर ब्रह्मा और रुद्र आदि को विशेष कार्य से उनकी आवश्यकता पड़ गई। वे उनसे मिलने के लिए वैकुण्ठ पहुँचे। वैकुण्ठ में उन्हें न पाकर उन्होंने ध्यान दृष्टि से जान लिया कि वे अमुक स्थान पर सोये हुए हैं। समस्त देवता ब्रह्मा और रुद्र आदि सहित वहीं पहुँच गये। उन्होंने दीमकों को आदेश दिया कि वे धनुष की प्रत्यंचा को खा लें और इसके बदले में उन्हें आश्वासन दिया कि उन्हें यज्ञ में भाग दिया जाएगा।

ब्रह्माजी के ऐसा आश्वासन देने पर दीमकों ने प्रत्यंचा के अग्र भाग को खा लिया. जिससे प्रत्यंचा मुक्त हो गई। धनुष का एक सिरा जोर से उछला और

भयंकर शब्द हुआ। समस्त देवता भयभीत हो उठे, ब्रह्माण्ड क्षुब्ध हो गया, पृथ्वी कम्पित होने लगी समुद्र उफनाने लगे, और जल चरप्राणी त्रस्त हो गये। पर्वत काँपने लगे और उल्कापात आदि विपत्ति की सूचना देने लगे। इस संकटपूर्ण स्थिति को देखकर देवता किंकर्तव्यविमूढ़ हो गये। उसी समय विष्णु का मस्तक कुण्डल सहित कटकर अदृश्य हो गया। अन्धकार दूर होने पर ब्रह्मा आदि ने विष्णु के मस्तकहीन विलक्षण देह को देखा और सभी आश्चर्यचकित, चिन्तित और शोकाकुल होकर विलाप करने लगे। इस प्रकार देवताओं को विलाप करते देख ब्रह्मा ने कहा, 'शुभाशुभ कर्मों के फल की प्राप्ति निश्चित है। प्रत्येक देहधारी समयानुसार सुख-दुःख भोगने के लिए विवश है। प्राचीन काल में रुद्र ने ही मेरा मस्तक काट दिया था। उसी प्रकार शाप वश शिवलिंग कट गया था, वैसे ही आज विष्णु का मस्तक कट कर लवण सागर में गिर गया है। अब हमें उन महामाया सनातनी त्रिपुरसुन्दरी का ध्यान करना चाहिए। वे परा प्रकृति ही हमारा कार्य करेंगी क्योंकि वे ही ब्रह्मविद्या, श्री विद्या जगद्धात्री हैं और सभी प्राणियों की जननी हैं और सभी चराचर जीवों में व्याप्त हैं।'

यह कहकर ब्रह्मा ने देवताओं सहित त्रिपुरसुन्दरी की स्तुति की। देवताओं की स्तुति से त्रिपुरसुन्दरी महामाया प्रसन्न हो गई और त्वष्टा को अपने घोड़े का सिर काटकर विष्णु के धड़ पर लगाने का आदेश दिया। विष्णु जीवित हो गये और हयग्रीव कहलाने लगे। बाद में इन्हीं हयग्रीव ने एक महान दैत्य हयग्रीव का संहार किया। इससे स्पष्ट है कि हयग्रीव भगवान् विष्णु थे। उक्त कथानक का यह भी तात्पर्य है कि देवी की हयग्रीव पर अत्यन्त कृपा थी।

हयग्रीव को महाबुद्धे कहा गया है, यह उनका विशेषण है स्तुति नहीं है।

**ललिता**: जो क्रीड़ा अथवा विहार करती हैं। पद्म पुराण में उल्लेख है, **लोकानतीत्य ललते ललिता नेन चोच्यते** अर्थात् 'वे लोकातीत होकर लोकलीला का लालन करती हैं।' शक्ति और शिव के आगे पराशक्ति और सदाशिव रूपों की अभिव्यक्ति होती है। प्रत्येक के अपने-अपने क्षेत्र और स्तर हैं। पर शिव महाशक्ति से अभिन्न हैं। जगतातीत होकर उनका निवास उस क्षेत्र में है जिसे महाकैलाश, अपराजित आदि कहते हैं। उनका शरीर घनीभूत घृत के समान सत्व का है। उसमें रजस् और तमस् का किञ्चित् मात्र भी अंश नहीं है। अन्य शिवशक्तियों का शरीर भी सात्त्विक है किन्तु फिर भी राजस और तामस गुण भी हैं— पूर्णतया सत्त्वगुण नहीं। अतः वे सर्वोत्तम अथवा परब्रह्ममूर्ति हैं, वे परब्रह्ममूर्ति मूलस्वरूपा हैं। इस शक्ति अथवा महामाया की अनेक रहस्यपूर्ण अभिव्यक्तियाँ तथा भेद हैं किन्तु यहाँ पर हमें केवल उसी रूप से मतलब है जिसे कामेश्वरी कहते हैं और जिन्हें ललिता की संज्ञा दी गई है। ललिता शृंगार-प्रिया है। अतः ललिता कहते हैं।

**परमाद्भुतम्** : परम अद्भुत इसलिए कि इससे पूर्व इस प्रकार के कथानक को श्रवण नहीं किया और न इस ढंग की कोई अन्य घटना ही सुनी।

ब्रह्माण्ड पुराण में उपसंहार के बाद ललितोपाख्यान आता है ऐसा प्रतीत होता है कि इसे बाद में जोड़ा गया है। वर्तमान में यह ब्रह्माण्ड पुराण का ही अंश है। ललितोपाख्यान के चालीस (४०) स्कन्ध हैं। इसका आरम्भ एक स्वतन्त्र मंगलाचरण से होता है और यह महामुनि अगस्त्य और भगवान हयग्रीव का संवाद है। इसमें ललिता सहस्रनाम नहीं है। ललितोपाख्यान की घटना कांची में हुई जिसे आजकल कांजीवरम कहते हैं। यह मद्रास से करीब ६० किलोमीटर है। नगर के दो भाग हैं पूर्वी भाग विष्णु कांची और पश्चिमी भाग शिव कांची जिसके अधिष्ठातृ देव शिव हैं, और उनके साथ कामाक्षी देवी हैं।

पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम्।
भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥२॥

**अर्थतदेव विशिनष्टि सप्तभिः पूर्वमित्यादिभिः। प्रादुर्भावः। 'असद्वा इदमग्र आसीत्', 'सदेव सोम्येदमग्र आसीत्', 'नासदासीन्नो सदासीदि'त्यादिश्रुत्येकवाक्यतया निर्णीतस्य सृष्टिप्राक्कालिकस्य निर्विशेषचिन्मात्रस्य प्राथमिकः कामकलारूपपरिणामो गुरुमुखैकवेद्यः। स च पूर्वं इतः प्राक्, पट्टाभिषेकादिभ्यः प्रथमं वा। त्वयोदित इति सर्वत्रान्वेति। अग्निकुण्डात्समुद्भूवरूपो वाऽवतारविशेषात्मा प्रादुर्भावः। पट्टं सकलभुवनसाम्राज्याधिकारस्तस्य विषयेऽभिषेचनं स्वायत्तीकरणेतिकर्तव्यतारूपोऽङ्गविशेषः। उदितमिति तु नपुंसकत्वेन परिणमनीयम्। भण्डाख्योऽसुरो ललितोपाख्याने यो विस्तरेण वर्णितस्तस्य वधो युद्धे हननं विस्तरेण बहुना शब्दराशिना। 'प्रथनेवावशब्दे' इति पर्युदासाच्छब्दभिन्न एव विस्तार इति रूपम् ॥२॥**

आपने मुझसे पहिले विस्तृत रूप से माता के प्रादुर्भाव तथा उनके पट्टाभिषेक का वर्णन किया और अन्त में भण्डासुर के वध की घटना भी बताई।

**प्रादुर्भाव**—श्रुतियों में उल्लेख है कि 'आदि में वास्तव में असत् था।' (तैत्ति उप० ११-६), 'आदि में केवल सत् ही था' (छान्द० उप० ६)। आदि में यह एक मात्र अद्वितीय सत् ही था। उन्हीं के विषय में किसी ने ऐसा भी कहा है कि आरंभ में वह एक मात्र अद्वितीय असत् ही था। उस असत् की उत्पत्ति होती है। किन्तु हे सौम्य ! ऐसा कैसे हो सकता है, भला असत् से सत् की उत्पत्ति कैसे हो सकती है ? अतः हे सौम्य ! आरम्भ में यह एकमात्र अद्वितीय सत् ही था, ऐसा आरुणि ने कहा है। 'सत् ने ईक्षण किया मैं बहुत हो जाऊँ नाना प्रकार से उत्पन्न होऊँ।' इस प्रकार ईक्षण कर उसने तेज उत्पन्न किया। उस तेज ने ईक्षण किया कि मैं भी अनेक हो जाऊँ। इस प्रकार उसने जल की रचना की। तेज से ही जल की रचना

होती है। इसी से जहाँ कहीं पुरुष सन्ताप करता है वहाँ उसे पसीना आ जाता है। उस जल ने ईक्षण किया, 'हम बहुत हो जाएँ—अनेक रूप से उत्पन्न हों। उसने अन्न की रचना की। इसी से जहाँ कहीं वर्षा होती है, वहीं बहुत सा अन्न होता है। यह अन्नाद्य जल से ही उत्पन्न होता है।" एक अन्य स्थान पर आता है, 'उस समय न सत् था और न असत् था।' श्रुतियों के उक्त कथनों से यह निष्कर्ष निकलता है कि अभिव्यक्ति अथवा प्राकट्य से पूर्व केवल पूर्ण चिति शक्ति ही थी किन्तु प्रथम अभिव्यक्ति कामकला रूप का बीज इसमें किस प्रकार उद्भूत हुआ, इसके सम्बन्ध में मनिषियों का कहना है कि इसका ज्ञान केवल गुरु ही दे सकते हैं। यह निश्चित है कि सृष्टि का प्रारम्भ कामकला बीज से ही हुआ।

अथवा प्रादुर्भाव का आशय उन की अवतार कथा या अग्निकुण्ड से प्रगट होने से है।

श्रीविद्या के ग्रन्थ चिद्विलास की व्याख्या में श्लोक-ग्यारह और बारह में कहा गया है, 'परा शक्ति से ही संसार की उत्पत्ति, स्थिति और प्रलय होता है। उस पराशक्ति का आसन ब्रह्माण्ड के अनुसार इस पिण्ड में भी नव-संख्यात्मक है। छः स्थानों से जाने के मार्ग हैं और वही छः स्थान षट् चक्रों के नाम से व्यवहृत होते हैं।

'ऊर्ध्व त्रिकोण में ऊपर का बिन्दु सूर्य है जो मुखरूप में से चिन्तनीय है और नीचे के दोनों बिन्दु अग्नि एवं चद्रमा हैं जिनका चिन्तन स्तनद्वय रूप से किया गया है। और अहं शब्द में योनिस्वरूपी हकार ही ऊर्ध्वकुण्डली के रूप में ध्यान करने योग्य है, यही कामकला का स्वरूप है।

**पट्टाभिषेचनम्**—सम्पूर्ण ब्रह्माण्ड की शासिका के रूप में परम भट्टारिका सच्चिदानन्दस्वरूपिणी राजराजेश्वरी के पद पर अभिषेक। ललितोपाख्यान में इसका विस्तृत रूप से वर्णन किया गया है।

## देवी का विवाह और अभिषेक

ललितोपाख्यान में हयग्रीव कहते हैं कि देवी के प्रादुर्भाव को सुनकर ब्रह्मा, आदि देवता उनका दर्शन करने गये। विष्णु और शिव भी गए। नारद तथा असंख्य अन्य ऋषिमुनि भी पहुँचे। विश्वकर्मा ने अमरावती के समान एक दिव्यपुरी का निर्माण किया। यह पुरी अत्यन्त सुन्दर थी। उसमें बड़े-बड़े भवन एवं परकोटे थे। एक विशाल सभा भवन में रत्नजड़ित अनेक सिंहासन थे। चिन्तामणियों से निर्मित एक दिव्य सिंहासन मुख्य था। ब्रह्मा ने सोचा कि पुरी की शक्ति और वैभव के बल पर साधारण व्यक्ति भी त्रिलोकी का स्वामी हो सकता है। श्रुति में कहा गया है कि तीनों लोकों में शंकर के अतिरिक्त और कोई भी इनका वरण करने योग्य नहीं है। इस समय महेश्वर (शिव) का स्वरूप अतुलनीय था। करोड़ों

कामदेव भी उनके सामने लज्जित हो रहे थे। ब्रह्मा ने उन्हें देखकर उनका आलिंगन कर उन्हें कामेश्वर की संज्ञा प्रदान की। ब्रह्मा इस निष्कर्ष पर पहुँचे कि वे ही परा शक्ति के योग्य वर हैं। उन्होंने समस्त देवों सहित परा-शक्ति की वन्दना की। देवी को देखकर नीललोहित (शिव) अपनी सुधबुध खो बैठे और अपने क्रिया-कलापों का भी उन्हें ध्यान नहीं रह गया। देवी भी उन्हें देखकर प्रेम से अभिभूत हो गई और मन ही मन शिव को पति रूप में वरण कर लिया। दोनों ही भाव-विभोर हो गये। कुछ समय के लिये दोनों ही उद्वेलित हो उठे।

इसके पश्चात् ब्रह्मा ने आद्याशक्ति से निवेदन किया कि समस्त देवता, ऋषि, मुनि, किन्नर, गन्धर्व और अप्सराओं आदि की मनोभिलाषा है कि आप हमें युद्ध क्षेत्र में अपने पति सहित दर्शन दें। आप संसार की दैत्यों से रक्षा करने के लिए जिसका समझें उसका वरण करें और इस पुरी के सिंहासन को सुशोभित करें। समस्त देव, ऋषि मुनि आदि आप को महाराज्ञी पद पर अभिषिक्त करेंगे। हमारी आकांक्षा आपको अपने पति के साथ सिंहासन पर आसीन करने की है।

ब्रह्मा के ये वचन सुनकर देवी ने ब्रह्मा, विष्णु और अन्य देवों और मुनियों को सम्बोधित करते हुए कहा, 'मैंने आदि काल से स्वतन्त्र हूँ। मेरी जीवन शैली मेरी लीला, मेरे क्रिया-कलाप मेरी इच्छा से ही होते हैं। अतः मेरे उपयुक्त पति ऐसा ही होगा जिसके जीवन का व्यवहार मेरी जीवन शैली के उपयुक्त हो।' देवी के इस कथन का अनुमोदन करते हुए ब्रह्मा बोले, 'आप ही ब्रह्म हैं, आप ही चिति और आनन्द हैं जिनसे प्रकृति का उद्भव हुआ है। आप अनादि और अनन्त हैं तथा कार्य और कारणरूपा आप ही हैं। आप ही पंच ब्रह्मस्वरूपिणी हैं अर्थात् आप ही सद्-असद्, कामरूपा, व्यक्त और अव्यक्तरूपा हैं। आप ही सृष्टि की रचना करती हैं और उसे धारणा भी करती हैं। संसार के कल्याण के लिए आप जिसे अपने उपयुक्त समझें उसका वरण करें।' बार-बार ब्रह्मा के अनुनय विनय करने पर देवी ने एक पुष्पहार उठाया और उसे आकाश में उछाल दिया। यह हार नीचे आकर कामेश्वर के कण्ठ में गिरा। सभी देवों में आनन्द छा गया। ब्रह्मा के कहने पर विष्णु ने धार्मिक रीति से कामेश्वर और देवी को मंगलमय सूत्र में आबद्ध कर दिया।

विवाह उपरान्त सभी देवताओं ने देवी को अनेक दिव्य वस्तुयें भेंट कीं। ब्रह्मा ने एक महान शक्तिशाली ईख का धनुष जो सदैव अक्षुण्ण रहने वाला था, हरि ने पुष्प बाण, वरुण ने नागपाश, विश्वकर्मा ने अंकुश, अग्नि ने मुकुट, चन्द्र और सूर्य ने दो बड़े-बड़े बाले, रत्नाकर ने मणियों की माला, इन्द्र ने मधु पात्र, कुबेर ने चिन्तामणियों की माला, विष्णु ने छत्र, गंगा और यमुना ने चंवर, तथा आठों वसुओं, रुद्रों, आदित्यों, अश्विनीकुमारों, मरुतों, गन्धर्वों, साध्वों तथा प्रमथों के स्वामी ने अपने अपने शस्त्र भेंट किये। अन्य देवताओं ने भी विभिन्न प्रकार के

रथ, अश्व, गज, ऊँट, और विभिन्न प्रकार के आयुध भेंट किये।

तदन्तर अभिषेक की तैयारी होने लगी। ब्रह्मा ने वायवीय रथ तैयार कराया जिसका नाम कुसुमाकर था। यह रथ आकाश और पृथ्वी दोनों पर ही वायु की गति से चलने में समर्थ था। बड़े उत्साह और समारोहपूर्वक देवी को कामेश्वर सहित सिंहासन पर बैठाया गया। देवी ने भी इस अवसर पर अपनी शक्तियों के द्वारा उपस्थित जनों को उनकी मन चाही वस्तुएँ प्रदान कीं। इसके अनन्तर कामेश्वर देवी सहित करीब दस सहस्र वर्षों तक इस पुरी में रहकर तीनों लोकों का शासन करते रहे।

**भण्डासुरवधश्चैव**—भण्डासुर के वध का भी वर्णन हयग्रीव ने किया। इस प्रसंग में भण्डासुर के जन्म, वैभव तथा वध की यहाँ चर्चा करना प्रासंगिक होगा। वैसे इस सन्दर्भ में ललितोपाख्यान में इसका विस्तृत उल्लेख है। संक्षेप में यह कथानक इस प्रकार है :

अगस्त्य मुनि के प्रश्न करने पर हयग्रीव ने बताया कि भण्डासुर का जन्म रुद्र की क्रोधाग्नि से हुआ था। अतः भण्ड दानव बना। उसका स्वभाव अत्यन्त भयंकर था। भण्ड काम का ही आकार था। देवताओं ने शिव का विवाह पार्वती से करानें के लिए, शिव की तपस्या को भंग करने के लिए अपना माध्यम काम को ही बनाया था जिसने शिव की तपस्या में विघ्न उपस्थित कर दिया किन्तु शिव के तीसरा नेत्र खोलते ही कामदेव भस्म हो गया। पार्वती जी को इससे बड़ा दुःख हुआ। कामदेव के भस्मीकरण को देख कर गणों के अधिष्ठाता चित्रकर्मा ने भस्म से एक आश्चर्यजनक व्यक्ति का आकार बना दिया। रुद्र ने अपने सम्मुख जब इस आकार को देखा तो उनकी दृष्टि पड़ते ही उस आकार में प्राण संचारित हो उठे। ऐसा प्रतीत हुआ कि जैसे काम एक बार पुनः शरीरधारी बन गया हो। वह अत्यन्त शक्तिशाली और देदीप्यमान हो गया। उसकी प्रभा दोपहर के सूर्य के समान प्रखर थी। चित्रकर्मा ने आह्लादपूर्वक उसको आलिंगनबद्ध करते हुए कहा, 'हे पुत्र! महादेव की स्तुति करो। वे समस्त पदार्थों के दाता हैं।' ऐसा कह कर चित्रकर्मा ने उसे शतरुद्रीय मंत्र भी प्रदान किया। उस बालक ने एक सौ बार मंत्र का पाठ करते हुए रुद्र को नमन किया। भगवान महादेव बालक पर अत्यन्त प्रसन्न हो गए और उन्होंने उसे वर मांगने को कहा। बालक ने महादेव से निवेदन किया कि मुझे सदैव अपने शत्रु का आधा बल प्राप्त होकर मेरे बल के साथ संयुक्त हो जाय। मेरे वाण उसके महत्वपूर्ण गणों और शस्त्रों को व्यर्थ कर दें। महादेव ने 'तथास्तु' कह कर उसको वर प्रदान कर दिया और कुछ क्षण मौन रहने के वाद बोले कि तू साठ हजार वर्ष तक शासन करेगा।

महादेव के इस उदार चरित्र को देख कर ब्रह्मा ने 'भण्ड, भण्ड, भण्ड' कहा

इसी से यह बालक भण्ड कहलाया। भण्ड का शाब्दिक अर्थ होता है 'भाग्यवान' यही बालक आगे चलकर भण्डासुर कहलाया।

## भण्ड, भण्डासुर के रूप में

कुछ समय के पश्चात् भण्ड एक शक्तिशाली शासक हो गया और उसे भण्डासुर कहा जाने लगा। सैकड़ों और हजारों दैत्यों ने उसे अपना राजा मान लिया। दैत्यों के गुरु शुक्राचार्य ने उसको अपना शिष्य बना लिया। उनकी प्रेरणा से उसने माया का आवाहन किया तथा अनेक दैत्य वास्तु कलाकारों को बुलाकर शोणितपुर में, जहाँ पहले भी दैत्यों की महान् नगरी थी, पुनः नगर निर्माण करने का आदेश दिया। यह नगर केदार-गंगा अथवा मन्दाकिनी के तट पर स्थित था। यह स्थान कुमायूं (उत्तर प्रदेश) में उषा मठ से छः मील की दूरी पर बताया गया है। कुछ ही समय में नगर का निर्माण हो गया। यह अत्यन्त वैभवशाली एवं मनोरम था। भण्डासुर स्वयं भी वहाँ गया। वहाँ पर उसने एक दिन बाँसुरी वादन सुना और साथ ही उसे एक अत्यन्त सुन्दर नारी के भी दर्शन हुए। उसके साथ उसकी सखियाँ थीं। दैत्यराज भण्डासुर और अन्य दैत्य सेनापति उनके साथ आमोद प्रमोद में फँस कर वेदों और उमापति को पूरी तरह भूल गए। उन्होंने यज्ञ तथा अन्य शुभ कर्मों का परित्याग कर दिया। अब वे धीरे-धीरे अपने गुरु शुक्राचार्य का भी अपमान करने लगे। इस प्रकार रागरंग में फँसकर दस हजार वर्ष पूरे हो गये। देवताओं ने चैन की साँस ली। दैत्य निरन्तर अत्याचारी होते गये।

इस बीच एक दिन नारद ऋषि इन्द्र की सभा में पधारे। स्वागत सत्कार के पश्चात् नारद ने इन्द्र से कहा कि दैत्यों का अधिपति भण्डासुर विष्णु की माया के प्रति अत्यन्त आसक्त हो गया है। यदि वह इस मोहिनी आकर्षण से मुक्त हो जाय तो वह तीनों लोकों को भस्मीभूत करने की क्षमता रखता है। वह तुमसे भी अधिक मायावी और शक्तिशाली है। अतः उस दैत्य का तेज नष्ट करना आवश्यक है। इसके लिए तुम पराशक्ति की आराधना करो अन्यथा करोड़ों कल्पों में भी उसका नाश नहीं हो सकता। निश्चय ही देवी त्रिपुरसुन्दरी तुम्हारा कल्याण करेंगी। नारद की इस चेतावनी को सुनकर इन्द्र तथा अन्य देवता घबरा गए। उन्होंने देवी की आराधना करने का निश्चय किया और हिमालय की ओर जाने की तैयारी में लग गये। भागीरथी के तट पर पहुँचकर देवताओं ने इन्द्र सहित परा शक्ति की पूजा आरम्भ कर दी। इस प्रकार आराधना करते हुए दस हजार वर्ष हो गये।

देवताओं की इस तपस्या के समाचार से दैत्य हतप्रभ हो गये। तब उनके गुरु शुक्राचार्य भडासुर के पास जाकर बोले, 'दैत्यराज! तुम्हारी शक्ति के बल पर ही दैत्य निर्भय होकर तीनों लोकों में विचरण करते हैं। हरि सदैव तुम्हारी जाति

के प्रति शत्रुता रखते आये हैं। उन्होंने ही इस माया का निर्माण कर तुम्हें भ्रमित कर दिया है। तुम्हें इस प्रकार राग-रंग में फंसा देखकर तुम्हें पराजित करने के उद्देश्य से इन्द्र ने देवताओं सहित कठिन तपस्या आरम्भ कर दी है यदि परा शक्ति जगज्जननी महात्रिपुरसुन्दरी इससे प्रसन्न हो गयीं तो युद्ध में देवताओं की विजय निश्चित है। अतः तुम माया द्वारा निर्मित इस मोहिनी नारी का परित्याग कर दो तथा मन्त्रियों सहित हिमालय में जा कर देवताओं की तपस्या में विघ्न पैदा कर दो।' दैत्यराज के मन्त्री श्रुतवर्मा ने भी यही परामर्श दिया। भण्डासुर इन बचनों को मानकर अपने मन्त्रियों सहित देवताओं की तपस्या को खण्डित करने के लिए चल दिया। मार्ग में देवी ने उनका मार्ग अवरुद्ध करने के लिए एक दुर्भेद्य दीवार खड़ी कर दी। दैत्यों ने एक शक्तिशाली यन्त्र चलाकर दीवार को नष्ट कर दिया। इस प्रकार कई बार नयी प्राचीर बनीं और कई बार नष्ट हुई। अन्त में दैत्य थक कर और निराश होकर अपने नगर को वापिस चले गए।

देवताओं की तपस्या धीरे-धीरे बढ़ती ही गई और अन्त में उन्होंने अग्निकुण्ड में अपने शरीर के माँस की आहुति देना प्रारम्भ कर दिया। शरीर का माँस समाप्त हो जाने पर उन्होंने अपने शरीर को ही अर्पित कर देने का निर्णय किया। उन्होंने यह निर्णय किया ही था कि अग्नि की ज्वाला तीव्र हो गयी और अग्नि के मध्य एक देदीप्यमान चक्र का आविर्भाव हुआ। देवताओं और इन्द्र ने इस चक्र के मध्य में महादेवी को देखा। बाल रवि के समान वर्ण, रूप अतुलनीय, और हाथों में पाश, अंकुश, कोदण्ड और पाँच बाण चमक रहे थे। देवता आनन्दमग्न हो गये और देवी के चरणों में नमन कर उनकी स्तुति करने लगे। देवी अत्यन्त प्रसन्न मुद्रा में थीं और उन्होंने देवताओं से वर माँगने को कहा। इस पर इन्द्र ने देवी से निवेदन किया कि 'हे अम्ब! हमारी रक्षा करो। हम आपकी शरण में हैं। दैत्यराज भण्डासुर के कारण हमारा जीवन संकट में है और हम महान विपत्तियों से घिरे हुए हैं।' देवताओं की आर्त वाणी को सुनकर देवी बोलीं—'मैं स्वयं दैत्यराज भण्ड को युद्ध में पराजित कर उसका वध करूँगी तथा तुम्हें तीनों लोकों का राज्य प्रदान करूँगी।' इस वरदान को प्राप्त कर देवराज इन्द्र तथा देवता आनन्द से अभिभूत हो गए और अपने स्थानों को चले गये।

दैत्यों का अत्याचार बढ़ता ही जा रहा था और देवता अत्यन्त त्रासदायक स्थिति में पहुँच गये थे। किन्तु उन्हें यह विश्वास था कि देवी ने उन्हें जो वरदान दिया है, उसकी उपयुक्त समय पर पूर्ति होगी।

एक दिन नारद ऋषि घूमते-घामते उनकी नगरी में जा पहुँचे। उन्होंने देवी के सम्मुख देवताओं की असह्य पीड़ा का वर्णन किया। नारद द्वारा प्रस्तुत वृतान्त को सुनकर अम्बिका ने भण्डासुर दैत्य का संहार करने का निश्चय किया। अम्बिका की इस घोषणा के होते ही युद्ध की तैयारियाँ प्रारम्भ हो गईं। ललिता परमेश्वरी

ने सम्पत्करी, अपराजिता, दण्डनाथा आदि को सेनाएँ सुसज्जित करने तथा युद्ध के लिए प्रस्थान करने का आदेश दे दिया। सेनाओं के प्रस्थान से चारों दिशाएँ गूंज उठीं, सेना के आगे-आगे देवी की शक्तियाँ चल रही थीं। साथ में क्रोधामुखी, चंड, डण्ड आदि भैरव, पोत्रमुखी तथा दण्डनाथा भी थीं। दण्डनाथा अपने सिंह पर आरूढ़ थीं जिसका नाम वज्रघोष था। दण्डनाथा सबसे आगे थीं। देवता आकाश में देवी के नामों का जय-जयकार कर रहे थे। संकेत योगिनी ने मन्त्रनाथा के चरण स्पर्श किए और सेना ने आगे बढ़ना आरम्भ कर दिया। संगीता योगिनी के साथ यंत्रिणी और तंत्रिणी भी थीं। देवी के रथ को कई अक्षौहिणी सैनिक घेरे हुए थे।

महामहिषी ललिता की सेना ने भण्डासुर पर आक्रमण करने के लिए प्रस्थान कर दिया है, यह समाचार विद्युत की तरह चारों ओर फैल गया। भण्डासुर की राजधानी शून्यक में जो महेन्द्र पर्वत के निकट थी और जहाँ भण्डासुर का भाई त्रिसंग रहता था, यह समाचार पहुँचते देर न लगी। इस नगर का विस्तार सौ योजन में था। नगरवासियों में देवी के आक्रमण के समाचार से खलबली मच गई। अनेक प्रकार के अशुभ चिह्न प्रगट होने लगे। बड़े जोरों का भूकम्प आया जिससे नगर में जहाँ तहाँ अग्नि काण्ड हो गये। दैत्य घबराकर हाहाकार करने लगे। नगरवासियों ने भण्डासुर के दरबार में जाकर दुहाई मचाई। दैत्यराज ने तुरन्त मन्त्रिमण्डल की बैठक बुलाकर स्थिति पर विचार किया। दैत्यराज के दोनों भाई विसंग और विशुक्र ने सेना को तैयार होने का आदेश दिया। दोनों भाई बड़े पराक्रमी थे और उनके नाम से तीनों लोक काँपते थे। अन्य सेनापतियों ने भी बड़ी डींग हाँकते हुए कहा कि देवता सब कायर हो चुके हैं, महेश्वर भयभीत हैं और दैत्यराज के साधारण सैनिक ही ललिता की सेना का संहार करने में समर्थ हैं। एक ने तो यहाँ तक कह डाला कि वह ललिता के बाल पकड़ कर खींचते हुए दैत्यराज के चरणों में डाल देने की क्षमता रखता है। विसंग भी इस प्रकार की बातें बनाने में किसी से पीछे न रहा किन्तु साथ ही उसने दैत्यों को इस बात से भी सावधान किया कि हमें अत्यन्त सावधान रहना चाहिए कि कहीं हिरण्यकशिपु, महीष, शुम्भ और निशुम्भ, आदि के प्रति बरती गई नीति के हम भी शिकार न हो जायँ। भण्डासुर भी अत्यन्त जोश में आ गया और उसने भी बढ़ चढ़कर अपनी वीरता की खूब डींग हाँकीं।

देवी की सेनायें बढ़ती चली आ रही थीं, अतः दैत्यराज ने भी अपनी सेना को युद्धभूमि में जाने का आदेश दिया। पहला आक्रमण दैत्यों की ओर से ही हुआ। देवसेना से भीषण हुँकार कर दैत्यों पर झपट पड़ीं। भयानक संग्राम हुआ और भूमि हाथियों, अश्वों तथा सैनिकों के मृत शरीरों से पट गई। सम्पत्करी की मार से दैत्य सेना में भगदड़ मच गई। कुछ देर के लिए देव सेनायें पीछे हट गईं किन्तु

२८ तंत्रों में से एक है, जिनकी रचना शिव ने की। इस तंत्र में देवी की ही चर्चा है।

( ३५२ ) **वह्निमण्डलवासिनी**—वह्निमण्डल मूलाधार में है, जहाँ आपका निवास है। अथवा परमाकाश में निवास है। ज्योतिषशास्त्र में वह्नि का अर्थ तीन भी है। इस प्रकार वे चन्द्रमा, सूर्य और अग्नि इन तीन के मण्डलों में निवास करती हैं। तीन मण्डल—सहस्रार में चन्द्रमा, अनाहत में सूर्य तथा मूलाधार में अग्नि। इसका अर्थ पंचदशाक्षरी मन्त्र के तीन कूट भी हो सकता है।

**भक्तिमत्कल्पलतिका पशुपाशविमोचिनी।**
**संहृताशेषपाखण्डा सदाचारप्रवर्तिका॥ १२९॥**

भक्तिमतां जनानां कल्पलतिकेव अभिमतार्थदातृत्वात्। अथवा ईषदसमाप्तौ कल्पप्प्रत्ययेनाऽपूर्णभक्ता भक्तिमत्कल्पाः तेषां लतिकेव विस्तारकारिणी। कस्तूरिकेवामोदयित्री वा। 'ज्योतिष्मत्यां च कस्तूर्यां माधवीदूर्वयोर्लते'ति रभसः। अर्धभक्तानां भक्तिपूर्तिदानद्वारा सन्तोषिकेति यावत्। तदुक्तं शक्तिरहस्ये—'अक्रमेणार्धभक्त्या वा भवान्याः कृतमर्चनम्। जन्मान्तरे क्रमप्राप्त्यै पूर्णभक्त्यै च कल्पत' इति। अभेदज्ञानरूपविद्याविहीनाः पशवः। तदुक्तं बृहदारण्यके—'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'रिति। इह योन्यां त्रिकोणचक्र इत्यर्थः। 'तस्मिन् हिरण्मये कोशे त्र्यरे त्रिप्रतिष्ठित' इति श्रुत्यन्तरात्। ईदृशानां पशूनां विद्याविहीनानां पाशे पिपासाऽशनाये विशिष्य मोचयतीति तथा। पिबतेरश्नातेश्च धातुद्वयस्य पाशपदेन निर्देशः। पातेरश्नातेश्च क्विपि पा अश् हलन्तात्टापि तयोः समाहारे पाशमिति रूपम्। तावन्मात्रवत्त्वादेव हि पशुत्वं निर्विद्यानाम्। तथा च श्रूयते—'अथेतरेषां पशूनामशनापिपासे एवाभिज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोका'विति। अथवा पशु इत्यव्ययं सम्यगर्थे 'लोधं नयन्ति पशु मन्यमाना' इति श्रुतौ तथा व्याख्यानदर्शनात्। पशु यथा भवति तथा पाशान् वरुणपाशान् विमोचयतीति। यद्वा सम्यक्पाशानक्षान् पातयतीति। शिवेन सह द्यूतक्रीडायां सम्यक्पाशान् फलके पातयित्वा शिवं जयतीति यावत्। अथवा पशुपस्य परशिवस्याशा प्रेप्सा येषां ते पशुपाशास्तान् विशेषेण मोचयति प्राप्तशिवांस्तनोतीति। अथवा ब्रह्मादिस्थावरान्ताः पशुसमानधर्मत्वात्पशवः तेषां बन्धसाधनत्वादविद्यैव पाशः। तदुक्तं सौरसंहितायामविद्यानामनिर्वचनप्रकरणे—'सर्वाधारतयाधारः पाशो बन्धस्य हेतुत' इति। तद्विकारास्तत्त्वादयो वा पाशास्तान् शिवभक्त्या मोचयति। तदुक्तं लैङ्गे—'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः। पशवः परिकीर्त्यन्ते समस्ताः पशुवर्तिनः॥ चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति। विषया अपि कीर्त्यन्ते

पाशजीवनिबन्धनात् ।। तैर्बद्धाः शिवमप्यत्यैव मुच्यन्ते सर्वदेहिन' इति । अथवा अविद्याऽस्मिता रागो द्वेषोऽभिनिवेशश्चेति पञ्चविधः क्लेशः । आत्मानात्म-विवेकाभावोऽविद्या । अनात्मनि देहादावात्मत्वविपर्ययोऽस्मिता । तेन च देहोप-भोगकरणे स्वचन्दनादावभिलाषो रागः । तत्प्राप्तिपरिपन्थिनि क्रोधो द्वेषः । तदिदमहितमिति ज्ञात्वाप्यज्ञवत्तदपरित्यागोऽभिनिवेश इति । तदिदं योगसूत्रे प्रथमपादोपान्त्यसूत्रेणोद्देशमात्रं कृत्वा द्वितीयपादे पञ्चभिः सूत्रैः सलक्षणमुक्तम् । यत्तूक्तं देवीभागवते—'तमो विवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ।। मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन' इति ।। तत्र तमःप्रभृतीन्यविद्यादीनामेव नामा-न्तराणि । मरणशब्दो मिथ्याभिनिवेशपरः । तदिदमुक्तं लैङ्गे—'अविद्यामस्मितां रागं द्वेषं च द्विपदां वर ! । वदन्त्यभिनिवेशं च क्लेशान्पाशत्वमागतान् ।। तमो मोहो महामोहस्तामिस्रमथ पण्डिताः । अन्धतामिस्रमित्याहुः क्लेशान्वै पञ्चधा-स्थितान् ।। अविद्या तम इत्याहुरस्मिता मोह इत्यपि । रागं चैव महामोहं द्वेषस्ता-मिस्रमि'त्यपि ।। अन्धतामिस्रकं मिथ्याभिनिवेशं प्रचक्षत' इति । एतेषां पञ्चानां क्लेशानां प्रभेदा अपि तत्रैव—'तमसोऽष्टविधो भेदो मोहश्चाष्टविधः स्मृतः । महामोहप्रभेदास्तु बुधैर्दश विचिन्तिताः ।। अष्टौ विधास्तथा प्राहुस्तामिस्रस्य विचक्षणाः । अन्धतामिस्रभेदाश्च तथाष्टादश कीर्तिता' इति संहृत्य द्विपञ्चाशत् । तामिस्रस्याप्यष्टादशविधत्वमाश्रित्य द्विषष्टिः पाशा इति केचित् । एते च क्लेशा वैषयिकयोगितत्त्वज्ञरूपपशुत्रैविध्यात्तांस्तान्प्रति विलक्षणाः । तदुक्तं देवीभागवते—'प्रसुप्तास्तत्त्ववेत्तॄणां दग्धदेहास्तु योगिनाम् । अविच्छिन्नोदाररूपाः क्लेशा विषयसङ्गिना'मिति ।। यत्तु कुलार्णवे—'घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी । कुलं शीलञ्च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः' इति तदविद्यादिक्लेश-पञ्चकस्योक्तेष्वेव द्विपञ्चाशद्भेदेषु कतिपयानामवयुत्यानुवादः । ते च भेदा विस्तरभयान्नोक्ताः । इत्थञ्च मूले पशुशब्द उत्तरदिशाम्यैकपञ्चाशत्सङ्ख्यापरोऽपि प्रत्यासत्तिसम्बन्धेन लक्षणया द्विपञ्चाशत्परः । 'नित्यानन्दवपुर्निरन्तरगलत्पञ्चा-शद्वर्णैः क्रमा'दिति शारदातिलकश्लोके पञ्चाशत्पदस्येवृशलक्षणयैव हर्षदीक्षितादि-भिरेकपञ्चाशत्परत्वेन व्याख्यानात् । तेन पशुसङ्ख्यान् द्विपञ्चाशत्पाशान्विमोच-यतीत्यर्थः । तदुक्तं शिवरहस्ये—'पञ्चक्लेशैर्द्विपञ्चाशत्पाशैर्बध्नाति यः पशून् । स एव मोचकस्तेषां भक्त्या सम्यगुपासित' इति तु पौराणिकरीत्या निष्कर्षः । अथवा अणुर्भेदः कर्म चेति त्रयः पाशाः तत्राज्ञानमणुः । तच्च चैतन्यस्वरूपे आत्मन्या-त्मत्वज्ञानाभावो देहादावनात्मन्यात्मत्वज्ञानं चेति द्विविधम् । द्विविधमप्येतत्सम्भू-याणवं मलमित्युच्यते । अणुपदवाच्यत्वं चास्यापरिच्छिन्नस्याप्यात्मनः परिच्छेद-कत्वात् । तदुक्तं सौरसंहितायाम्—'आत्मनोऽणुत्वहेतुत्वादणुर्मालिन्यतो मल'-

मिति । एकस्यैवात्मनो नानात्वं तु भेदः । तत्र मूलकारणं मायाख्यं तत्त्वेषु षष्ठमेकम् । तज्जन्यं सप्तमादिषट्त्रिंशान्ततत्त्ववृन्दमपरमिति द्विविधमपि मायीयं मलमुच्यते । विहितनिषिद्धक्रियाजन्यं शरीरदानक्षममदृष्टं तु कर्म । तदपि पुण्यपापभेदेन द्विविधमपि सम्भूय कार्मणं मलमुच्यते । एतेष्वणुकर्मभेदेषूत्तरोत्तरं पूर्वपूर्वव्याप्यं सर्वमिदमभिहितं प्रत्यभिज्ञाशास्त्रे—'स्वातन्त्र्यहानिर्बोधस्य स्वतन्त्रस्याप्यबोधता । द्विधाणवं मलमिदं स्वस्वरूपापहारतः ॥ भिन्नवेद्यप्रथात्मैव मायीयं जन्मभोगदम् । कर्तव्यबोधकार्मं तु मायाशक्त्यैव तत्त्रय'मिति ॥ स्पष्टतरमुक्तं शैवसूत्रवार्तिके—'नन्वेवंविधविभ्वस्य चैतन्यं चेद्वपुस्तदा । कथं बन्धस्य सम्बन्ध इति शङ्कां व्यपोहितुम् ॥ अश्लेषश्लेषपाठाभ्यां सूत्रमाह महेश्वरः' । अज्ञानं बन्धः । 'अज्ञानमिति तत्राद्यं चैतन्यस्फाररूपिणी । आत्मन्यनात्मताज्ञानं ज्ञानं पुनरनात्मनि ॥ देहादावात्ममानित्वं द्वयमप्येतदाणवम् । मलं स्वकल्पितं स्वस्मिन्बन्धस्वेच्छाविभाविताः ॥ किमाणवमलात्मैव बन्धोऽयं नेत्युदीर्यते' । योनिवर्गः कलाशरीरम् । 'योनिर्भेदप्रथाहेतुर्मायावर्गस्तदुत्थितः । कालादिक्षितिपर्यन्ततत्त्वराशिस्तदात्मकः ॥ मायीयाख्यं मलं तत्तद्भिन्नवेद्यप्रथामयम् । कलेति कायमाविश्य परिच्छेदकरी नृणाम् ॥ व्यावृत्तिः पुण्यपापात्मा शरीरं यस्य तत्पुनः । कार्मणं मलमेतस्मिन्द्वये बन्धोऽनुवर्तत'इति ॥ एवम्भूतेषु त्रिषु पाशेष्वेकेन द्वाभ्यां त्रिभिरपि बन्धप्रयुक्ता जीवा अपि त्रिविधाः पशुपदेनोच्यन्ते । यद्यपि त्रयाणां प्रस्तारेष्वेकास्त्रयो द्विकास्त्रयस्त्रिक एक इति सप्तधा जीवाः सम्पद्यन्ते तथाप्यणुकर्मभेदानामुत्तरोत्तरस्य पूर्वपूर्वव्याप्यत्वनियमात्तिस्र एव पशोर्विधाः । ते च पशवो नित्याहृदये शुद्धमिश्राशुद्धपदैर्व्यवह्रियन्ते । स्वच्छन्दतन्त्रादौ तु विज्ञानकेवलाः प्रलयाकलाः सकला इति व्यवहृताः । तथा चोक्तम्—'पशवस्त्रिप्रकाराः स्युस्तेष्वेके सकला मताः । प्रलयाकलनामानस्तेषां केचिन्महेश्वरि ॥ विज्ञानकेवलास्त्वन्ये तेषां रूपं क्रमाच्छृण्वि'ति । तेषु त्रिभिरपि पाशैर्बद्धः सकलः । तदुक्तम्—'अनादिमलसञ्छन्नो मायाकर्मावृतो विभुः । शरीरशिवतत्त्वज्ञो भेदैकरसिको लघुः ॥ सर्वदा कर्मकर्ता च स्वकर्मफलभोजकः । नित्यं विषयसंरक्तः सकलः पशुरुच्यत' इति ॥ अत्र मलमायाशब्दावणुभेदपरौ । एते च सकलाः पशवो मलपाकापाकाभ्यां द्विविधाः । तत्र ये पक्वमलास्त्रयस्तेषां मध्येऽष्टादशोत्तरशतसङ्ख्याकाः सिद्धाः परिपूर्णशिवानुग्रहवशान्मन्त्रेश्वरतामाप्ता वर्तन्ते । ते च शतरुद्राख्या अष्टौशतमण्डलिनोऽष्टौ क्रोधभट्टारकादयो वीरेश्वरः श्रीकण्ठश्चेति द्वाविति । अन्यानप्याचार्यरूपेण शिव एवानुगृह्णाति अपरिपक्वमलत्रयांस्तु भोगेन मलपाकाय नानायोनिषु विनियुङ्क्ते सोऽपि चानुग्रह एव । तदुक्तम्—'मलादीनामपाके तु सामान्यानुग्रहो भवेत् । अधिकारिकमैश्वर्यं शिवानुग्रहमायतः ॥ पशवस्त्रिप्रकारास्तु प्राप्नुयुः परमेश्वरी'ति । 'नानायोनिषु पाकाय नियुङ्क्तेऽनुजिघृक्षये'ति च ॥

अणुकर्माख्यपाशद्वयबद्धास्तु प्रलयाकलाः । तेऽपि तयोः परिपाकतदभावाभ्यां द्विविधाः । तेष्वन्त्याः कर्मवशादुत्तमयोनिषु जायन्ते । आद्येषु यत्रेश्वरानुग्रहस्ते भुवनेश्वरा भवन्ति । तदुक्तं स्वच्छन्दसङ्ग्रहे—'मिश्राः प्रमातृरूपाः स्युः प्रलयाकलसंज्ञकाः । पुर्यष्टकशरीराश्च पृथक्कर्मवशात्प्रिये ।। सर्वयोनिषु सम्प्राप्य भोगाद्यं स्वस्वकर्मणाम् । भुक्त्वा भोगानि तेषां तु कर्मसाम्ये शिवः स्वयम् ।। सुपक्वमलकर्माणस्तान् किञ्चिदनुगृह्य च । जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्विध'ेति ।। आणवमलमात्रबद्धा विज्ञानकेवलाः । तदुक्तम्—'मलमात्रेण सम्बद्धः पशुर्विज्ञानकेवलः । सुपक्वमलविज्ञानकेवलः स स्वयं प्रिये' इति ।। तेऽपि समाप्तकलुषा असमाप्तकलुषाश्चेति द्विविधाः । तत्राद्या विद्येश्वराः । अन्त्यास्तु सप्तकोटिमहामन्त्रात्मकाः । न च तेषां जडत्वमिति शङ्क्यम् । शब्दरूपशरीराणां जडत्वेऽपि शरीरिणामस्माकमिव चेतनत्वोपपत्तेः । अत एव मृगेन्द्रसंहितायाम्—'अथानादिमलापेतः सर्वकृत्सर्वदृक् शिवः । पूर्वं व्यत्यासितस्याणोः पाशजालमपोहती'ति । आगमिका अप्याहुः । 'भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थानाम् । जडवर्गस्य विधत्ते सर्वानुग्राहकः शम्भु'रिति । अपक्वाणवमलवज्जीवत्वादेव मन्त्राणामणुसंज्ञापि । एवं षड्विधानामपि पशूनां मलपाकतारतम्यानन्त्यादनन्ता भेदाः । तेषां च तत्तत्तारतम्याद्यैर्योनिप्रापणैश्वर्यदानान्यपि भोगेन मलपाकार्थत्वात्पाशविमोचनरूपाण्येव । तथा च पशूनामुक्तरूपाणां पाशान्मलान्विशेषेण तत्तद्योग्यतानुसारेण मोचयतीति पशुपाशविमोचिनी । न च मोचनस्य शिवकार्यत्वात्कथं तत्र देव्याः कर्तृत्वमिति वाच्यम् । मोचकत्वशक्तिमन्तरेण शिवस्य तदयोगेन मोचनकर्तृताया अन्वयव्यतिरेकाभ्यां शक्तावेव स्वीकर्तुं युक्तत्वात् । तदुक्तमभियुक्तैः—'शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य । तामेनां चिद्रूपामाद्यां सर्वात्मनास्मि नत' इति । किञ्च स्वातन्त्र्यं हि कर्तृत्वम् । 'स्वतन्त्रः कर्ते'ति पाणिनिसूत्रात् । तच्च शक्तिगतमेव । तथा च शक्तिसूत्रम्—'चितिः स्वतन्त्रा विश्वसिद्धिहेतु'रिति । यत्तु 'चैतन्यमात्मे'ति शिवसूत्रं तत्स्वातन्त्र्यानिर्देशान्नपुंसकलिङ्गबलाच्च कर्तृत्वादिधर्माभावपरम् । यत्तु 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुरित्याद्यसूत्रं किल शक्तिशास्त्रे । चैतन्यमात्मेति तु शैवशास्त्रे शिवश्च शक्तिश्च चिदेव तस्मा'दित्यभियुक्तैरुच्यते तत्तु शक्तिमतोरभेदाभिप्रायेणेति तु शैवरहस्यनिष्कर्षः । संहृता नाशिता अशेषाः समस्ताः पाखण्डा यया सा तथोक्ता । पाखण्डस्वरूपं च लैङ्गे—'वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः । पाखण्डिन इति ख्याता न सम्भाष्या द्विजातिभि'रिति ।। ब्रह्मवैवर्तेऽपि—'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशे'ति ।। परिगणतानि विद्यास्थानान्यधिकृत्य 'एतत्सत्यमितश्चान्यत्पाखण्डं बुद्धिकल्पितम् । वैरयानां मोहनार्थाय महामोहन निर्मित'मिति ।। 'पाशब्देन तु वेदार्थः पाखण्डास्तस्य खण्डका' इति तु निरुक्तिः ।

अत एवाह सदाचारप्रवर्तिकेति । सद्भुत्तमः सतां शिष्टानां वा सतो ब्रह्मणो वा आचारः सदाचारस्य प्रवर्तिका । कर्मकाण्डोक्ते धर्मे ब्रह्मकाण्डोक्तेऽद्वैतब्रह्मणि चाभिरतिपूर्वकं तत्तत्प्राप्तिसाधनानि पुराणादिषूपदिशत्यनुष्ठापयतीति यावत् । उक्तञ्च कूर्मपुराणे भगवत्यैव—'अष्टादश पुराणानि व्यासेन कथितानि तु । नियोगाद्ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥ अन्यान्युपपुराणानि तच्छिष्यैर्व्या- कृतानि तु । युगे युगे तु सर्वेषां कर्ता वै धर्मशास्त्रवित् ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च । ज्योतिःशास्त्रं न्यायविद्या सर्वेषामुपबृंहणम् ॥ एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ! । चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥ एवं पैतामहं धर्मं मनुव्यासादयः परम् । स्थापयन्ति ममादेशाद्यावदा- भूतसम्प्लव'मिति ॥ १२९ ॥

( ३५३ ) भक्तिमत्कल्पलतिका—भक्तों के हृदय की बेल । कल्प एक ऐसी लता होती है जो सभी मनोवांछित वस्तुओं को प्रदान करती है । अथवा कल्प का अर्थ है—अपूर्ण । वे अपने अपूर्ण भक्तों को पूर्ण बना देती हैं । लता का शाब्दिक अर्थ है—बेल या फैलने वाला पौधा ।

अथवा लता 'मुश्क' को भी कहते हैं । वे अपने भक्तों पर सुगन्ध की वर्षा करती हैं । रभसकोश के अनुसार लता का अर्थ है—हृदय की बेल, मुश्क, चमेली और कुशा ।' तात्पर्य यह है कि वे अपने अपरिपक्व भक्तों के हृदय को भक्ति प्रदान कर विकसित कर देती हैं । शक्तिरहस्य में इसका उल्लेख है—'जो अनियमित रूप से भी भवानी की आराधना करता है अथवा जिसकी भक्ति पूर्णतया परिपक्व नहीं है, वह अगले जन्म में नियमित भक्ति से परिपक्व हो जाता है ।'

( ३५४ ) पशुपाशविमोचिनी—मूढ़ों को भी पाश से मुक्त कर देने वाली । पशु का शाब्दिक अर्थ भी मनुष्य या पशु है । पशु वे हैं जिन्हें न अभेद का ज्ञान है और न ही विद्या का ज्ञान है । बृ० उ० ( १.४.१० ) का कथन है—'वह जो अन्य देवता की आराधना करता है और यह धारणा रखता है कि देवता उसके 'स्व' से पृथक् हैं, वह कुछ भी नहीं समझता है और पशु के समान है ।' यहाँ पर जो 'योऽन्यम्' शब्द आया है, इसका अर्थ है कि वह स्वयं और देवता उससे अन्य है—त्रिभुज( श्री )चक्र । श्रुति में कहा गया है—'उस स्वर्णिम त्रिदल कलिका में तीन देवियों के त्र्यक्षरी मंत्र की स्थापना है ।' अतः वे पशु हैं जिन्हें इसका ज्ञान नहीं है ।

पाश-बन्धन : 'पा' कहते हैं पिपासा को और 'आश' क्षुधा को । यह पिपासा ( प्यास ) और क्षुधा ( भूख ) अज्ञानियों को ही सताती हैं और 'वि' का अर्थ है—पूर्णतया और मोचिनी का अर्थ है—मुक्त करने वाली । तात्पर्य

यह है, कि इस प्रकार अज्ञानियों को, जो विद्याविहीन हैं तथा पिपासा और क्षुधा के पाश से आबद्ध हैं, उन्हें विमुक्त कर देती हैं। अज्ञानियों को पशु इसलिए कहा है, क्योंकि वे सदैव भूख-प्यास की चिन्ता में ही पड़े रहते हैं। श्रुति का कथन है—'अन्य पशु केवल भूख और प्यास की ही समझ रखते हैं, वे ब्रह्म की बात नहीं करते, वे ज्ञान को नहीं देखते, वे भविष्य का भी ज्ञान नहीं रखते और न इस संसार की अथवा अन्य लोकों की ही उन्हें जानकारी रहती है।'

अथवा पशु ( अव्यय, अविनाशी ) का अर्थ है—पूर्णतया; जैसा कि श्रुति में कहा गया है—'सम्यगर्थे' आदि। इस प्रकार पशु शब्द की व्याख्या की गयी है। पाश—वरुण का जाल, जिससे वे अपने भक्तों को मुक्त करती हैं।

पाश–जाल, वि–अधिक, मोचिनी–छुड़ानेवाली। इसका आशय है कि शिव के साथ द्यूत-क्रीड़ा में पाशे फेंकते ही उन्होंने शिव पर विजय प्राप्त कर ली।

'पशुप'—पशुओं का रक्षक ( प ), अर्थात् परम शिव। जो व्यक्ति शिव को प्राप्त करना चाहते हैं, ऐसे लोगों को पाश से पूर्णतया मुक्त कर देने वाली।

पशु—ब्रह्म से लेकर वृक्ष तक सभी वस्तुएँ पशु हैं, क्योंकि उनमें पशुओं के गुण हैं ( अर्थात् खाने-पीने की तृष्णा )। पाश अविद्या है, क्योंकि यही बन्धन का एक मात्र कारण है। सौरसंहिता में अविद्या शब्द की परिभाषा करते हुए कहा गया है कि 'सभी बन्धनों का कारण यही है।'

अथवा पाश—अविद्या के सात अथवा सोलह भेद हैं। विमोचिनी—यदि वे शिव की भक्ति करें तो वे उनको मुक्त कर देती हैं। मुक्ति का माध्यम यही शिव-भक्ति है। लिङ्गपुराण का कथन है—'ब्रह्मा से लेकर पशु तक तीन वृत्ति वाले पशु हैं। देवों के देव भी इसी के अन्तर्गत आते हैं, क्योंकि उनका भी पशुओं जैसा ही स्वभाव या प्रकृति है।' चौबीस वर्गों अथवा भेदों में ( माया ) भ्रान्ति, कर्म और गुणों तथा पदार्थों को भी पशु कहते हैं, क्योंकि वे जीवों को बन्धन में डालते हैं। इन बन्धनों से प्रतिबद्ध समस्त जीव-आत्माएँ जिन्होंने देह का आश्रय लिया है, केवल शिव के प्रति भक्ति करने से ही मुक्त हो जाती हैं।

अज्ञान पाँच प्रकार का है—अहंकार, राग, मोह, क्रोध और आसक्ति। 'स्व' और 'पर' में भेद करना ही अज्ञान है। अहंकार—यह मान्यता है कि शरीर आदि जो स्व नहीं हैं, वे ही स्व हैं। शरीर को आनन्दित करने के लिए पुष्पों, सुगन्धियों आदि के पीछे पागल होना राग है। उनकी प्राप्ति में जो बाधा आती है, वही क्रोध है। वास्तविक आसक्ति वह है जिसमें यह जानते हुए भी कि यह वस्तु हमारे लिए उपयोगी नहीं है, उसे न छोड़ना। योगसूत्र

( ३.३.९ ) में इसकी व्याख्या की गयी है। किन्तु देवीभागवतपुराण का कथन है कि 'भेदाभेद ही अन्धकार अथवा तमस् है, मस्तिष्क का उद्वेलित होना मोह है, सांसारिक सुखों के लिए कामना करना महामोह है, मृत्यु ही अन्धतमिस्र है और क्रोध तमिस्र है। इस प्रकार जिसका अज्ञान ब्रह्म से प्रकट हुआ था, वह पांच प्रकार का है।' यहाँ तमस् आदि जिन पांच शब्दों का प्रयोग किया गया, वे अज्ञान के ही पांच नाम हैं। यहाँ पर मृत्यु उत्कट आसक्ति के सदृश ही है। योगसूत्र के अनुसार इसकी भी व्याख्या लिङ्गपुराण में इस प्रकार की गयी है—'मनीषियों का कथन है कि अज्ञान, अहंकार, राग, द्वेष और आसक्ति—ये पांच पाश हैं। ज्ञानीजन कहते हैं कि अज्ञान पांच प्रकार के हैं—तमस्, उद्वेलता, महाउद्वेलितता, क्रोध और भयंकर क्रोध। उनका कहना है, कि यह जो अज्ञान अथवा अविद्या तमस् है, वही अहंकार है, जिससे मानव का मन अत्यधिक उद्वेलित होता है, जीवन के प्रति आसक्ति, गहरा क्रोध और द्वेष क्रोध है।' इसी ग्रन्थ में क्लेश रूपों के और भी प्रभेद बताये गये हैं। कहा है कि तमस् आठ प्रकार का, मोह आठ प्रकार का तथा महामोह दस प्रकार का होता है; क्रोध आठ प्रकार का और भयंकर क्रोध अठारह प्रकार का होता है।' इस प्रकार इनकी संख्या ५२ हुई। कुछ लोगों का कहना है, कि भयंकर क्रोध और भी दस प्रकार का होता है, इस प्रकार यह संख्या ५२ से बढ़कर ६२ होती है। तीन प्रकार के मानव जैसे सांसारिक, योगी और तत्त्वज्ञानी बताये गये हैं। इनको रखने से इन बासठ में भी भेद हो जाता है। देवीभागवतपुराण के अनुसार—'तत्त्वज्ञानियों में ये भाव प्रसुप्तावस्था में रहते हैं, योगियों में दग्धरूप में और सांसारिक भोगों और मोह से लिप्त मनुष्यों में अविच्छिन्न और उदार रूप में रहते हैं। ये ही क्लेश कहे जाते हैं।'

कुलार्णव का कथन है—'पाश आठ प्रकार के होते हैं, जैसे—घृणा, शंका, भय, लज्जा, जुगुप्सा, कुल, शील और वर्ण या जाति। अविद्या आदि क्लेश आपस में एक-दूसरे के विरोधात्मक रूप में नहीं हैं। ये छोटे-छोटे पाश अथवा क्लेश ही बढ़कर बड़ा रूप ले लेते हैं। इन विभिन्न रूपों की चर्चा यहाँ पर नहीं की गयी है, क्योंकि इससे विषय अधिक विस्तृत हो जायेगा।

मूलपाठ में 'पाश' शब्द आया है। वररुचिपद्धति के अनुसार यद्यपि इनकी संख्या ५१ है, वैसे ५२ ही मानी गयी है। 'स' पांच तथा 'प' एक का द्योतक है। नित्यानन्दवपुह में, जो शारदातिलक का ही एक भाग है, प्रथम श्लोक में उक्त शब्द की संख्या ५० आती है, किन्तु हर्षदीक्षित आदि ने इसे ५२ ही माना है। अतः पशु का अर्थ ५२ पाशों से युक्त है। पाश ही अविद्या है। विमोचिनी का अर्थ है—दूर करने वाली। शिवरहस्य में कहा गया है—'वही व्यक्ति जो

बावन पाशों अथवा क्लेशों से और पाँच अविद्याओं के बन्धन से जीवों को मुक्त कर सकता है, वही आराधना के योग्य है। उसकी आराधना भक्तिपूर्वक करनी चाहिए, जिससे वह उन्हें मुक्ति प्रदान कर सके।' यह पौराणिक मत अथवा व्याख्यान है।

अणु, भेद और कर्म—ये तीन पाश हैं। अज्ञान अणु है, जो दो प्रकार का होता है। प्रथम—अपने चैतन्यस्वरूप आत्मज्ञान का अभाव और द्वितीय—भ्रान्ति में पड़कर अज्ञानवश अपने को देह मान लेना आदि। ये दोनों मिलकर आणवमल कहलाते हैं। अणु को अणु इसलिए कहते हैं कि यह असीम 'स्व' अर्थात् आत्मन् को सीमित कर देता है। सौरसंहिता में कहा गया है, कि यह अणु इसलिए कहलाता है, क्योंकि यह आत्मन् को सीमित कर देता है और यही अशुद्धता है। मलिन बना देने के कारण यह मल कहलाता है।

भेद का अर्थ है—अपने को नाना रूपों में मानना। इसका मूलभूत कारण माया है। पाँच अविद्याओं के साथ इसे भी जोड़ दिया जाय तो अविद्या छः प्रकार की हो जाती हैं। यह एक समूह अर्थात् वर्गों का समूह हुआ। इन छः के फलस्वरूप ही ७ से लेकर ३६ तक एक दूसरा समूह हुआ। ये दोनों एक साथ संयुक्त होकर मायामल कहलाते हैं।

कर्म—कर्म का अर्थ विहित, निषिद्ध क्रिया अथवा कर्मों का फल है, जो शरीर देने में सक्षम है। इन्हें ही प्रतिबन्धित कर्म भी कहते हैं। यही अदृष्ट है। ये कर्म दो प्रकार के होते हैं—शुभ और अशुभ। संयुक्त रूप से इन्हें कर्ममल कहा जाता है।

इन तीनों में पूर्व के बतलाये गये मलों के गुण भी समाविष्ट रहते हैं। प्रत्यभिज्ञान-शास्त्र में इसकी व्याख्या इस प्रकार की गयी है—'अपनी स्वतंत्रता का बोध न रह जाना तथा अपनी स्वतंत्रता को न समझना। इस प्रकार अणु के स्वभाविक रूप में दो मल हैं और इन्हीं के कारण वह अपने रूप को विस्मृत कर देता है और यही मल उसमें भ्रान्ति भी पैदा कर देता है, अपने को मानने लगता है और इसी से जन्म और मृत्यु के भाव की प्राप्ति होती है। कर्ममल वह है जिससे कर्तव्य-बोध होता है। इस प्रकार ये तीन पाश मायाशक्ति के ही परिणाम हैं।'

शैवसूत्र के वार्तिक में इसे और भी विशद रूप से इस प्रकार समझाया गया है—'यदि जाग्रत ( चैतन्य ) आत्मा ( विश्व ) को जैसा कि ऊपर बताया गया है कि ज्ञान ही शरीर है, तो फिर वह बन्धन अर्थात् पाश से किस प्रकार सम्बन्धित है? इस शंका को दूर करने के लिए ईश्वर सूत्रों में उत्तर देते हैं—'अश्लेषश्लेष' पाशों के सम्पर्क और असम्पर्क के कारण।' सूत्र ( १.२ ):

'अज्ञानं बन्धः' ( वार्तिक )—पहला अज्ञान अपने आत्मस्वरूप का ज्ञान न होना जो ज्ञान का कारण है और दूसरा शरीर को ही आत्मन् स्वीकार करना आदि जो कि आत्मस्वरूप नहीं है। ये दोनों अज्ञान अणु के हैं। मल स्व-कल्पित है। इसे अपने में आरोपित करने का स्पष्ट अर्थ है कि स्वयं अपनी इच्छा से बन्धन में पड़ना अथवा पाश युक्त होना। किन्तु अणुमल ही मुख्य पाश नहीं है।' सूत्र ( १.३ )—'योनिवर्गः कला शरीरम्।' योनि एक वर्ग है और कला शरीर है। योनि का आशय है—भेद। इसके विस्तार का कारण माया है। विभिन्न भेदों के समूह को वर्ग कहते हैं। इसकी प्रसविनी माया ही है और वही काल से लेकर पृथ्वी तक माया की अशुद्धता है। भेद की प्रतीति अथवा द्वैत का कारण भी वही है। कला का शाब्दिक अर्थ शरीरी आत्माएँ हैं। कला जीवों के शरीर-प्रवेश के बाद बहुमुखी भाव पैदा कर देती है, जिससे वे सीमित हो जाते हैं तथा अच्छे और बुरे के भाव से ग्रस्त हो जाते हैं। शरीर वह है जो कर्ममल कहलाता है। इन दोनों में पहला मल भी शामिल है।

इस प्रकार तीन पाश हुए। दूसरे में पहला और तीसरे में दूसरा भी सम्मिलित है। पशु शब्द तीन प्रकार के जीवों को व्यक्त करता है, जो तीन पाशों के परिणाम हैं। तीनों पाशों से सम्बन्धित जो सभी प्रकार से सम्भव कार्य हैं उनसे सम्बन्धित यद्यपि सात प्रकार के जीव माने जाते है, किन्तु वास्तव में जैसे कि दूसरे में पहला और तीसरे में दूसरा एवं पहला समाविष्ट है, इस प्रकार से तीन ही प्रकार के जीव होते हैं। नित्यहृदय में इन पशुओं को क्रमशः शुद्ध, मिश्रित और अशुद्ध कहा गया है। ये नाम इस प्रकार हैं—१. अणु, २. भेद और ३. कर्ममल। किन्तु स्वच्छंदतंत्र यथा अन्य शास्त्रों में इन्हें क्रमशः विज्ञानकेवल, प्रलयाकल और सकल की संज्ञा दी गयी है। इस प्रकार उपर्युक्त शास्त्रों में वर्णन मिलता है-—'तीन प्रकार के पशु हैं। इनमें से कुछ सकल और कुछ प्रलयाकल हैं। हे महेश्वरी! शेष को विज्ञानकेवल कहते हैं। इनकी प्रकृति भी क्रमानुसार इस प्रकार है—जो तीन पाशों से आबद्ध हैं, वे सब सकल कहे जाते हैं। कहा गया है कि 'जो आरम्भ से ही अशुद्ध हैं, भ्रान्ति एवं कर्मों से आबद्ध हैं ( यद्यपि वे स्वयं में शुद्ध हैं, तो भी) देह को ही आत्मा ( शिव ) मानते हैं, कर्मों की फल-प्राप्ति में प्रसन्न हैं, भोग-विलास में अनुरक्त हैं तथा अशुद्धता भी शेष है अर्थात् पूर्णतया दग्ध नहीं हुई है, वे सकल पशु हैं।'

ऊपर जिस अशुद्धता और भ्रान्ति का उल्लेख किया गया है, उसका तात्पर्य क्रमशः अणु और भेद से है। सकल पशु भी दो प्रकार के होते हैं—एक वे जिन्होंने अपना मल जला दिया है और दूसरे वे जिनके मल ज्यों-के-त्यों

हैं। इनमें भी जिन्होंने तीनों मल—अणु, भेद और कर्म को जला दिया है, वे ११८ सिद्ध हैं। उन्होंने शिव की अनुग्रह-शक्ति से मंत्रों पर अधिकार प्राप्त कर लिया है। इनमें सौ रुद्र हैं, आठ शतमण्डली, आठ क्रोधभट्टारक ( दुर्वासा ), एक वीरेश्वर, और अन्त के एक श्रीकण्ठ हैं। अन्य भी स्वयं शिवरूप में अर्थात् गुरु में सबको आशीर्वाद प्रदान करते हैं।

जिनके तीन मलों की समाप्ति नहीं हुई है, उनके जन्मों का क्रम निर्धारित कर दिया जाता है, जिससे कर्मों के भोग द्वारा वे अशुद्धता अथवा मलों को भस्मीभूत कर सकें। यह उनके प्रति महान् अनुग्रह है। ऐसा कहा गया है—'जब तक मल परिपक्व नहीं हो जाते, तब तक वे साधारण अनुग्रह के ही अधिकारी हैं। इस प्रकार हे महेश्वरी ! तीन प्रकार के पशु केवल शिव की कृपा से उपासना का अधिकार प्राप्त कर लेते हैं और वे करुणार्द्र अथवा द्रवीभूत होकर उनके लिए उन जन्मों का निर्धारण कर देते हैं, जहाँ वे मल के परिपक्व होने पर उसे भस्मीभूत कर सकें। जो केवल दो पाशों—अणु और कर्म से आबद्ध हैं, वे प्रलयाकल हैं, अर्थात् अस्थायी रूप से बद्ध हैं। इनके भी दो भेद हैं—एक वे जो मल को जला चुके हैं और दूसरे वे जो ऐसा नहीं कर सके हैं। जो मल नहीं जला सके हैं, वे कर्मशक्ति से उच्च स्थानों में पैदा होते हैं। उच्च स्थान का अर्थ धार्मिक दृष्टिकोण से लिया जाना चाहिए। पहले वाले परम सत्ता के अनुग्रह के फलस्वरूप ब्रह्माण्ड के अधिष्ठाता पदों पर पहुँच जाते हैं। ऐसा स्वच्छंदतंत्र में उल्लेख है—'मिश्रित पशु जिनकी सद्वृत्तियाँ हैं, उन्हें प्रलयाकल कहते हैं। इनका शरीर उनके विभिन्न कर्मों के कारण पुर्यष्टक कहलाता है। इनके अनेक जन्म होते हैं और ये अपने कर्मों का फल भोगते रहते हैं। जब कर्मों में साम्यता आ जाती है, तब वे शिव रूप हो जाते हैं, क्योंकि उन्होंने कर्ममल को पूर्णतया भस्मीभूत कर दिया है और कुछ को रख लिया है। वे भी संसार में स्वामी के पदों पर पहुँच जाते हैं तथा तत्त्वों, जल आदि पर शासन करते हैं। ये शासक अथवा स्वामी भी तीन प्रकार के होते हैं।'

जो केवल अणुमल से आबद्ध हैं, वे विज्ञानकेवल कहलाते हैं। क्योंकि ऐसा कहा गया है कि—'वे पशु जो केवल एक मल ( अणु ) से बद्ध हैं उन्हें विज्ञानकेवल कहते हैं। जब वे इस मल को भी भस्म कर देते हैं तो वे केवल विवेकी अथवा ज्ञानी ही रह जाते हैं।' ये भी दो प्रकार के हैं—एक वे जिनका वासनाओं से पीछा छूट गया है और दूसरे वे जिनका पीछा अभी नहीं छूटा है। पहले प्रकार के पशु ज्ञान के भण्डार विद्येश्वर हो जाते हैं और दूसरे सात करोड़ मन्त्रों में स्थान पाते हैं, जिन्हें देवता पद पर आसीन कहा जाता है।

इन्हीं का नाम मंत्र भी है। वे देवता पर आसीन अवश्य रहते हैं किन्तु मल-पाक न होने तथा आत्मिक विकास न होने के कारण देवत्व नहीं प्राप्त करते हैं। इन्हें अशरीरी अथवा केवल ध्वनि ही नहीं समझना चाहिए। हमारी ही भाँति उनमें चैतन्य रहता है। मृगेन्द्रसंहिता का कथन है—'जिसने अनादि अणु की मलिनता अथवा मल से छुटकारा पा लिया है, वह स्वयं में शिव, सर्वज्ञ और सर्वव्यापक हो जाता है तथा उस अणु के जाल को काट कर फेंक देता है जिसने उसे आबद्ध कर रखा था।'

आगम का कहना है—'शम्भु जो सभी को आशीर्वाद देते हैं तथा उन सभी को भी आनन्द और मुक्ति देते हैं, जो अणु से आबद्ध हैं और अशुद्धता को शस्म कर देते हैं।' मंत्रों को अणु भी कहते हैं, क्योंकि वे उस आत्मा के हैं जिसने अशुद्धता को भस्मीभूत नहीं किया है। इस प्रकार छः प्रकार के पशुओं के असंख्य भेद हैं और ये भेद मल को भस्मीभूत करने की क्रमोन्नति में है। इन्होंने अपनी प्रगति द्वारा अधिकारी स्थान प्राप्त कर लिये हैं और मलों को भस्मीभूत करने के भी वे माध्यम हैं।

किन्तु यदि मुक्ति शिव का कार्य है तो फिर देवी कहाँ से बीच में आ जाती हैं? इसका उत्तर है कि मुक्ति की शक्ति प्राप्त किये बिना शिव कुछ नहीं कर सकते। अतः यह मानना पड़ेगा कि मुक्ति का अधिकार अन्ततोगत्वा केवल शक्ति को ही है। मनीषियों ने भी इसी का अनुमोदन किया है—

'शक्तो यया सशम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य।
तामेनां चिद्रूपामाद्यां सर्वात्मनास्मि नतः॥'

अर्थात् 'मैं हृदय से उस शक्ति की आराधना करता हूँ जो सत्-चित्-आनन्द है और जिसके माध्यम से शिव समस्त पशुओं को मुक्ति और आनन्द प्रदान करते हैं।'

इसके अतिरिक्त 'शक्ति स्वतंत्ररूपा है।' क्योंकि पाणिनि-सूत्र (१.४.५४) के अनुसार—'माध्यम पूर्णतया स्वतंत्र है।' यह माध्यम शक्ति का है, अतः शक्तिसूत्र (१.१) में कहा गया है—'ज्ञान ही आत्मन् (शिव) है।' उक्त शिवसूत्र में स्वातंत्र्य का उल्लेख नहीं है तथा नपुंसकलिंग के कारण शिव में माध्यम के गुण की प्रतीति नहीं होती है। चैतन्य शब्द नपुंसकलिंग है। किन्तु ऊपर जो शक्ति और शिवसूत्र का उल्लेख किया गया कि 'देवी ज्ञान हैं, शिव ज्ञान हैं' तथा मनीषियों का यह कथन कि 'चित् शिव और शक्ति दोनों के लिए लागू होता है'—ऐसी शैवसिद्धान्त की मान्यता है।

इस प्रकार पशु से तात्पर्य उनसे है, जो पाश अथवा मल से आवद्ध हैं। पाश (मल) और विमोचिनी मुक्त करने वाली।

( ३५५ ) **संहृताशेषपाखण्डा**—धर्म-विरुद्ध आचरण करने वालों का नाश करने वाली। लिंगपुराण में धर्म-विरुद्ध आचरण करने वालों के स्वभाव की चर्चा करते हुए कहा गया है—'वेद-विरुद्ध काम करने वाले तथा श्रुति-स्मृतियों में बतलाये गये धार्मिक कृत्यों में भाग लेने से जिन्हें बहिष्कृत कर दिया गया है और जिनसे द्विज भी वार्ता नहीं करते हैं।' ब्रह्मवैवर्तपुराण में कहा गया है—'पुराण, न्याय, मीमांसा, धर्मशास्त्राङ्ग ( शिक्षा से ज्योतिष तक ), वेद—इन चौदह को धर्म-स्थान माना जाता है।' इनको मानने वाले ही आस्तिक एवं धर्मपरायण होते हैं। इनके अतिरिक्त जो अन्य चर्चा करते है, वे पाखंडी हैं। दैत्यों में भ्रान्ति पैदा करने के लिए अन्य ग्रन्थों की रचना की गई थी। पा का अर्थ है—वेद और खण्ड अर्थात् उनसे कट जाना।'

( ३५६ ) **सदाचारप्रवर्तिका**—सत् कर्म करने की प्रेरणा देने वाली। क्योंकि वे दुष्टों का संहार करती हैं और सत् कर्म करने की प्रेरणा देती हैं। इसका भाव यह भी है कि वे कर्मकाण्ड और ज्ञानकाण्ड में बतलाये गये अद्वैत-ब्रह्म सम्बन्धी ज्ञान का अनुकरण करने की प्रेरणा देती हैं। पुराणों में जो मार्ग बतलाया गया है, उसका पालन किया जाय। कूर्मपुराण में देवी स्वयं कहती हैं—'ब्रह्म के आदेश पर ही व्यास मुनि ने इनकी रचना की। उनके द्वारा धर्म की स्थापना की गयी है। उनके शिष्यों ने उप पुराणों की रचना की। प्रत्येक युग में व्यास ही धर्म के ज्ञाता माने जाते हैं और समस्त पुराणों के रचनाकार भी वे ही हैं, चारों वेद, शिक्षा, कल्प, व्याकरण, छन्द, ज्योतिष, तर्क तथा चौदह धर्मशास्त्र ज्ञान के मूलस्रोत हैं। धर्म का ज्ञान अन्य किसी माध्यम से नहीं हो सकता है। इस प्रकार सर्वोच्च धर्म ब्रह्मा, मनु, व्यास आदि से मेरे ही आदेश पर प्रसृत हुआ जो विश्व के प्रलयकाल तक स्थिर रहेगा।

**तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका ।**
**तरुणी तापसाराध्या तनुमध्या तमोपहा ॥ १३० ॥**

**आध्यात्मिकाधिभौतिकाधिदैविकाख्यानां तापानां त्रयं यस्य तेनाग्निना संसारलक्षणेन सम्यक्तप्तानां जनानां सम्यगाह्लादनेनापहरणपूर्वकानन्दनविषये चन्द्रिकेव वा। 'अजरोऽमृत' इति श्रुतेर्नित्यतारुण्यवत्वात् तरुणी। '–तरुणतलुनानामुपसङ्ख्यान'मिति वार्तिकावयवेन ङीप्। तापसैस्तपस्विभिराराध्या। तापस्तज्जनकः संसारस्तत्र सारभूता आध्या आसमन्ताद् ध्यानं यस्या इति वा। तनुः कृशो मध्यो यस्याः सा। काञ्चीदेशे तनुमध्याख्या देवी प्रसिद्धा। यदाह—'मां पातु निवायास्तीरे निवसन्ती। बिल्वेश्वरकान्ता देवी तनुमध्या'। तनुमध्याख्यसमवृत्तविशेषरूपा वा। तथा च पिङ्गलसूत्रम्—'तनुमध्या त्यौ'। पदचतुरूर्ध्वसूत्रात्प्रतिपादमित्यस्यानुवृत्त्या प्रतिपादं तगणयगणौ चेत् सा तनुमध्येत्युच्यत इति**

सूत्रार्थः । पूर्वोक्तमुदाहरणम्—'गायत्री छन्दसामह'मिति कौर्मे देवीवचनादस्य वृत्तस्य तच्छन्दस्कत्वात्तद्रूपता । तमोऽविद्यामपहन्तीति तमोपहा । तथा चेशावास्ये श्रूयते—'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासत' इति । अविद्यामिति पदकाराणां पाठः । 'विद्यान्योपासनामेवं निन्दत्यारण्यकश्रुति'रिति ब्रह्माण्डपुराणस्यमुपबृंहणञ्च ॥ १३० ॥

( ३५७ ) तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका—तीन तापरूपी अग्नि से जो पीड़ित हैं, उनको शीतलता प्रदान करने वाली चन्द्रिका । तीन प्रकार के ताप हैं—आध्यात्मिक, आधिभौतिक और आधिदैविक । ये ही अग्नियाँ हैं, इनसे जो मुक्त है, वह अमर हो जाता है, उसका क्षय नहीं होता ।

( ३५८ ) तरुणी—सदैव ही तरुण रहने वाली ।

( ३५९ ) तापसाराध्या—तपस्वियों की आराध्या । अथवा ताप—संसार कष्टों और पीड़ाओं का सागर है । सार, आ–गहरा, ध्या–ध्यान, अर्थात् देवी इस संसार-सागर के मध्य में ध्यान करने का एक मात्र सार हैं । जो उनकी आराधना करता है, वह इस संसार को पार कर लेता है ।

( ३६० ) तनुमध्या—क्षीण अथवा कृश कटि वाली । काञ्ची धारण करने वाले स्थान की देवी को तनुमध्या कहते हैं । ऐसा भी कहा गया है कि 'विल्वेश्वर की पत्नी तनुमध्या देवी जो निवाया के तीर पर निवास करती हैं, मेरी रक्षा करें ।'

तनुमध्या नामक एक छन्द भी होता है । पिंगलछन्दःसूत्र का कथन है—'यदि प्रत्येक पाद में एक तगण और एक यगण हो तो उसे तनुमध्या कहते हैं ।' शरीर के भी तीन भेद होते हैं ।' स्थूल, सूक्ष्म और कारण । सूक्ष्म पंचदशाक्षरी मंत्र का भी मध्यम भाग है ।

( ३६१ ) तमोपहा—तमस् ( अज्ञान ) को नष्ट करने वाली । तमस् एक प्रकार का अज्ञान अथवा अविद्या है । ईशोपनिषद् ( ९ ) में उल्लेख है—'जो अविद्या की आराधना करते हैं, वे गहन तमस् में प्रवेश करते हैं ।' ब्रह्म-पुराण में कहा गया है—'आरण्यक श्रुतिविद्या के अतिरिक्त अन्य सभी आराधनाओं को अविद्या ही मानते हैं ।

**चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी ।**
**स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥ १३१ ॥**

अत एवाह—चितिः अविद्यापरिपन्थिज्ञानस्वरूपा । 'चितिः स्वतन्त्रा विश्वसिद्धिहेतु'रिति शक्तिसूत्रोक्तस्वरूपेत्यर्थः । 'सैषा चितिरिति प्रोक्ता जीवनाज्जीवितैषिणा'मिति महावासिष्ठे । तत्त्वमस्यादिमहावाक्यघटकतत्पदस्य जगज्जन्मादिकर्तृत्वविशिष्टं शबलं ब्रह्म वाच्योऽर्थः । तदेवेह स्तूयमानं धर्ममात्रं तु शुद्धं

ब्रह्म लक्ष्योऽर्थः। अनयोश्च विशिष्टकेवलयोस्तादात्म्यं सम्बन्धः। तदेतदाह। तदितिपदेन लक्षणीयोऽर्थः यस्याः यत्तादात्म्यापन्नः सा तत्पदलक्ष्यार्था। धर्मिमात्रपरत्वे तु तत्पुरुषापत्त्या 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रिति नियमात्पुंल्लिङ्गतापत्तिः। ननु केवलमपि रूपमानन्दादिधर्मविशिष्टमेवेति वाच्यमेवास्त्वत आह। चिता सहैको रसः स्वरूपं येषां, चिदेव मुख्यो रसो येषां तानि चिदेकरसानि रूपाण्यानन्दचैतन्यादिधर्मा अस्याः सन्तीति चिदेकरसरूपिणी। स्वाभिन्नधर्मवतीति यावत्। उक्तञ्च पञ्चपादिकायाम्—'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इति। तथा च शक्यतावच्छेदकभूतसृष्टिकर्तृत्वादिधर्माणां स्वरूपानन्तर्गतत्वात् तदन्तर्गतधर्माणां चात्यन्ताभेदेन शक्यतावच्छेदकत्वाभावाद्भागत्यागलक्षणावश्यकीति भावः। यद्वा केवलं ब्रह्म नेश्वरस्य धर्मीति तयोर्भेदादुक्तः सम्बन्धो न घटत इत्यत आह। चिदेकरसं चिन्मात्राभिन्नं रूपमस्या एवेत्यर्थः। तयोर्भेदेऽप्यभेदस्यापि सत्त्वाद्भेदसमानाधिकरणाभेदस्यैव तादात्म्यरूपत्वादुक्तसम्बन्धो घटत एवेति भावः। ननु सृष्टिकर्तृत्वादिधर्माणां स्वरूपानन्तर्गतत्वेऽपि शक्यतावच्छेदकत्वसम्भवात्तद्विशिष्टस्यैव तत्पदेन प्रतिपादेन तदभेद एव वाक्यार्थोऽस्तु। वचनबलाद्विशिष्टयोरपि तादात्म्यस्वीकारसम्भवात्। 'यो यच्छ्रद्धः स एव स' इत्यादिवचनानामुपास्योपासकत्वादिधर्मविशिष्टयोरेवाभेदप्रतिपादने स्वारस्यात्। एतेनैतदन्यथानुपपत्त्या कल्प्यमानस्य निर्गुणस्यापि निरासाद्विशिष्टकेवलयोः सम्भवन्नपि सम्बन्धोऽप्रयोजक एवेत्यत आह—स्वात्मेति। स्वस्या आत्मरूपो य आनन्दस्तस्य लवीभूता इन्द्राद्यानन्दबिन्दुपर्यालोचनया सागरायमाणत्वेनालवा अपि देव्यानन्दसागरस्य लवाः सम्पद्यमानाः ब्रह्मादीनां सृष्टिकर्तृत्वादिधर्मविशिष्टानां ब्रह्मविष्णुरुद्राद्यानन्दानां सन्ततयः सम्यक्समूहा यस्याः सा। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः। तैत्तिरीये मानुषानन्दमारभ्योत्तरोत्तराधिक्येन वर्ण्यमानानामानन्दानां मध्ये परिगणितानां प्रजापत्याद्यानन्दानामपि परिच्छिन्नत्वेनापरिच्छिन्नब्रह्मानन्दतोऽल्पत्वेन पुरुषार्थत्वायोगेनापरिच्छिन्नानन्दस्य निर्गुणस्य सिद्धत्वाच्च पुरुषार्थसाधनज्ञानोपक्रमादितात्पर्यनिर्णायकप्रमाणाविरोधाय तत्पदस्य निर्धर्मकात्मलक्षकत्वमेव युक्तमित्याशयः। 'लवो लेशे विलासे चे'ति विश्वः॥ १३१॥

(३६२) चितिः—चिति ज्ञान है, जिसका विपरीतार्थक अविद्या है। शक्तिसूत्र का कथन है—'चिति स्वतन्त्र है और यही ब्रह्माण्ड की सृष्टि का कारण है।' महावाशिष्ठ में उल्लेख है—'देवी को ही चिति कहते हैं, क्योंकि यही उन लोगों के जीवन का आधार है, जो जीवित रहने की कामना रखते हैं।

(३६३) तत्पदलक्ष्यार्था—वे ही तत् स्वरूपा हैं। तत् का अर्थ साधारणतया सगुण ब्रह्म है, जो ब्रह्माण्ड की सृष्टि, स्थिति और संहार का कृत्य करते

हैं। इसी तत् शब्द से (अप्रत्यक्ष अथवा लक्ष्य) निरुपाधिक ब्रह्म का, जो निर्गुण है, बोध होता है। निर्गुण और सगुण ब्रह्म का सम्बन्ध तादात्म्य से है।

(३६४) **चिदेकरसरूपिणी**—ज्ञान का सार। निर्गुण ब्रह्म में भी आनन्द की उपाधि है। इसी प्रश्न का उत्तर देने के लिए यह नाम प्रयुक्त किया गया है। चिति आनन्द तथा अन्य उपाधियाँ—इनको स्पष्ट करते हुए कहा गया है, कि देवी की उक्त उपाधियाँ उनसे अभिन्न हैं। पद्मपादाचार्य के ग्रन्थ 'पंचपादिका' में इसके भाष्य में कहा गया है—'आनन्द अर्थात् इन्द्रिय-विषयक सुख और अनादिब्रह्म का आनन्द, ये दो भिन्न उपाधियाँ हैं। यद्यपि वे चैतन्य से अभिन्न हैं, किन्तु फिर भी पृथक् प्रतीत होती हैं।

अथवा निरुपाधि ब्रह्म ईश्वर (सगुण) का यथार्थ स्वरूप नहीं है, क्योंकि दोनों भिन्न हैं। अतः उन दोनों का सम्बन्ध जैसा कि ३६३वें नाम में दिखलाया गया है, सम्भव नहीं है। इस शंका का निवारण करने के लिए ही प्रस्तुत नाम प्रयुक्त किया गया है—'चिदेकरसरूपिणी', अर्थात् ये दोनों चित् के साथ अपरिहार्यतया सम्बन्धित हैं। इन दोनों के सम्बन्ध को ठीक वैसे ही मानना चाहिए जैसे एक ही मुद्रा के दो स्वरूप अर्थात् देखने में दो रूप किन्तु मुद्रा एक।

(३६५) **स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः**—'स्व' आत्मरूप का आनन्द उनके आनन्द का अंश मात्र ही है। इन्द्र आदि अन्य देवों का आनन्द, देवी के आनन्द की तुलना में ऐसा है, जैसे कि सागर में एक बूँद। ब्रह्मा आदि—ब्रह्मा, विष्णु और रुद्र जो सृष्टि, स्थिति और संहार के अधिकारी हैं। श्रुति का कथन है कि अन्य जीव इस आनन्द के कणमात्र पर जीवित हैं।

इसी श्रुति (तै० उप० २.८) में आगे चलकर कहा गया है कि मनुष्य, देवता, प्रजापति आदि के आनन्द में स्तर के अनुसार वृद्धि होती जाती है, किन्तु फिर भी वह सीमित है और निरुपाधिक ब्रह्म के आनन्द की समता के सामने इसका अस्तित्व कहाँ?' यह मानवीय आकांक्षा की पूर्ति के लिए नितान्त अक्षम है। इससे यह प्रमाणित होता है कि केवल ब्रह्मानन्द ही असीमित है। इससे स्पष्ट है कि 'तत्' (३६३) शब्द निरुपाधि अथवा निर्गुण ब्रह्म का द्योतक है। इसकी चर्चा करते हुए कहा गया है कि जो शास्त्र इसका अर्थ स्पष्ट करते हैं और उपक्रम तथा पुरुषार्थ आदि को ज्ञान-प्राप्ति का साधन बतलाते हैं, केवल उनका अनुमोदन करने के उद्देश्य से यह प्रयुक्त किया गया है।

विश्वकोष के अनुसार लव का अर्थ कण अथवा चिन्मात्र अंश है।

**परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता।**
**मध्यमा वैखरीरूपा भक्तमानसहंसिका॥ १३२॥**

ननु शब्दार्थयोस्तादात्म्यस्यैव शक्तिपदार्थत्वान्निर्गुणस्यापि ब्रह्मणः शब्दब्रह्माभिन्नत्वेन किमिति तत्र सत्यादिशब्दानां लक्षणेत्याशङ्क्य वैखर्यात्मकपदानां विराट्पुरुषेणैव सह तादात्म्येन शुद्धब्रह्मतादात्म्यं नास्त्येवेति समाधित्सया वाचं विभजते। अत्रेदं बोध्यम्। प्रलये सृज्यमानप्राणिकर्मणामपरिपाकदशायां तादृशकर्माभिन्नमायावच्छिन्नं ब्रह्म घनीभूतमित्युच्यते। कालवशात्कर्मणां परिपाके सति विनश्यदवस्थः परिपाकप्रागभावो विचिकीर्षेत्युच्यते। ततः परिपाकक्षणे मायावृत्तिरुत्पद्यते तादृशं परिपक्वकर्माकारपरिगणितमायाविशिष्टं ब्रह्माव्यक्तपदवाच्यम्। अत एव तस्योत्पत्तिरपि स्मर्यते—'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'ति। स एव जगदङ्कुरकन्दरूपत्वात्कारणबिन्दुपदेन व्यवह्रियते। तदुक्तं प्रपञ्चसारे—'विचिकीर्षुर्घनीभूता सा चिदभ्येति बिन्दुता'मिति। अस्माच्च कारणबिन्दोः सकाशात्क्रमेण कार्यबिन्दुस्ततो नादस्ततो बीजमिति त्रयमुत्पन्नम्। तदिदं परसूक्ष्मस्थूलपदैरप्युच्यते॥ चिदंशश्चिदचिन्मिश्रोऽचिदंशश्चेति तेषां रूपाणि। तदुक्तं रहस्यागमे—'कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा। स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥ स बिन्दुनादबीजत्वभेदेन च निगद्यत' इति। एते च कारणबिन्द्वादयश्चत्वारोऽधिदैवतमव्यक्तेश्वरहिरण्यगर्भविराट्स्वरूपाः, शान्तावामाज्येष्ठारौद्रीरूपा अम्बिकेच्छाज्ञानक्रियारूपाश्च। अधिभूतं तु कामरूपपूर्णगिरिजालन्धरोड्याणपीठरूपा इति तु नित्याहृदये स्पष्टम्। अध्यात्मं तु कारणबिन्दुः शक्तिपिण्डकुण्डल्यादिशब्दवाच्यो मूलाधारस्थः 'शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नरा' इत्यादिरीत्याचार्यैर्व्यवहृतः सोऽयमविभागावस्थः कारणबिन्दुः। अयमेव च यदा कार्यबिन्द्वादित्रयजननोन्मुखो भिद्यते तद्दशायामव्यक्तः शब्दब्रह्माभिधेयो रवस्तत्रोत्पद्यते। तदप्युक्तम्—'बिन्दोस्तस्माद्भिद्यमानादव्यक्तात्मा रवोऽभवत्। स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयत' इति। सोऽयं रवः कारणबिन्दुतादात्म्यापन्नत्वात्सर्वगतोऽपि व्यञ्जकयत्नसंस्कृतपवनवशात् प्राणिनां मूलाधार एवाभिव्यज्यते। तदुक्तम्—'देहेऽपि मूलाधारेऽस्मिन्समुदेति समीरणः। विवक्षोरिच्छयोत्थेन प्रयत्नेन सुसंस्कृतः। स व्यञ्जयति तत्रैव शब्दब्रह्मापि सर्वग'मिति। तदिदं कारणबिन्द्वात्मकमभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं तदेव च परावागित्युच्यते। अथ तदेव नाभिपर्यन्तमागच्छता तेन पवनेनाभिव्यक्तं विमर्शरूपेण मनसा युक्तं सामान्यस्पन्दप्रकाशरूपकार्यबिन्दुमयं सत्पश्यन्तीवागुच्यते। अथ तदेव शब्दब्रह्म तेनैव वायुना हृदयपर्यन्तमभिव्यज्यमानं निश्चयात्मिकया बुद्ध्या युक्तं विशेषस्पन्दप्रकाशरूपनादमयं सन्मध्यमावागित्युच्यते। अथ तदेव वदनपर्यन्तं तेनैव वायुना कण्ठादिस्थानेष्वभिव्यज्यमानमकारादिवर्णरूपपरं श्रोत्रग्रहणयोग्यस्पष्टतरप्रकाशरूपबीजात्मकं सद्वैखरीवागुच्यते। तदुक्तमाचार्यैः—'मूलाधारात्प्रथम-

मुदितो यश्च भावः पराख्यः, पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः। व्यक्ते वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्णाबद्धस्तस्माद्भवति पवनप्रेरिता वर्णसंज्ञा' इति। नित्यातन्त्रेऽपि—'मूलाधारे समुत्पन्नः पराख्यो नादसम्भवः। स एवोर्ध्वतयानीतः स्वाधिष्ठाने विजृम्भितः॥ पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः-शनैः। अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः॥ तथा तयोर्ध्वंनुन्नः सन्विशुद्धौ कण्ठदेशतः। वैखर्याख्य' इत्यादि। इत्थं चतुर्विधासु मातृकासु परादित्रयमजानन्तो मनुष्याः स्थूलदृशो वैखरीमेव वाचं मन्वते। तथा च श्रुतिः—'तस्माद्यद्वाचो नाप्तं तन्मनुष्या उपजीवन्ती'ति। अनाप्तं अपूर्णं तिसृभिर्विरहितमित्यर्थं इति वेदभाष्ये। श्रुत्यन्तरेऽपि 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ती'ति। स्कान्दे यज्ञवैभवखण्डेऽपि—'अपदं पदमापन्नं पदं चाप्यपदं भवेत्। पदापदविभागश्च यः पश्यति स पश्यती'ति। अपदं गतिरहितं निःस्पन्दं शब्दब्रह्मैव परादिपद-चतुष्टयं जातं तदिदं पदचतुष्टयमेव ज्ञातं सदपदं ब्रह्मैव भवतीति तदर्थः। एवं श्रुतिस्मृतिभ्यां तदिति पदस्य चातुर्विध्यात् 'ते विभक्त्यन्ताः पद'मिति गौतम-सूत्रेण—'सुप्तिङन्तं पद'मिति पाणिनिसूत्रेण च प्रतिपादितपदलक्षणान्तर्गत-सुप्रत्ययादेरपि चातुर्विध्यात्परात्मकतत्पदस्यापि त्रिगुणाव्यक्तमात्रतादात्म्यवत्त्वेन ततोऽपि परतरनिर्गुणब्रह्मतादात्म्याभावेन वैखर्यात्मकतत्पदस्य कैमुतिकन्यायेन दूरापास्तं तत्तादात्म्यमिति शब्दार्थयोस्तादात्म्यमेव शक्तिरिति पक्षेऽपि तत्पदस्य केवले लक्षणैव स्वीकार्येति भावः। मातृकाभेदेषु तिसृभ्यः परत्वात्परा। त्रिपुरा-सिद्धान्ते तु प्रकारान्तरैरपि निरुक्तिरुक्ता—'श्रीपरानन्दनाथस्य प्रसन्नत्वात्परेति सा। परानन्दाभिधे तन्त्रे प्रसिद्धत्वाच्च सा परा॥ प्रासादरूपिणी चेति परा सा शाम्भवीपरे'ति। प्रतिकूलं स्वात्माभिमुखमञ्चतीति प्रतीची सा च सा चिती च प्रत्यक्चिती अव्यक्तसंज्ञं ब्रह्म सैव रूपं यस्यास्तथा। चिनोतेः क्तिजन्तात् 'कृदि-कारादि'ति ङीष्। पश्यतीति पश्यन्ती। अस्या एवोत्तीर्णेत्यपि संज्ञा। उक्तञ्च सौभाग्यसुधोदये—'पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा। तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माते'ति। परा उत्कृष्टा चासौ देवता च परदेवता। उपास्येश्वरस्वरूपेत्यर्थः। मध्ये स्थिता मध्यमा। तदुक्तम्—'पश्य-न्तीव न केवलमुत्तीर्णा नापि वैखरीव बहिः। स्फुटतरनिखिलावयवा वाग्रूपा मध्यमा तयोरस्मा'दिति। विशेषेण खरः कठिनस्तस्येयं वैखरी सैव रूपं यस्याः। घनभावमापन्नेति यावत्। वै निश्चयेन खं कर्णविवरं राति गच्छतीति व्युत्पत्तिः सौभाग्यसुधोदये कथिता। 'प्राणेन विखराख्येन प्रेरिता वैखरी पुन'रिति योग-शास्त्रवचनाद्विखरवायुनुन्नेति वा। भक्तानां मानसे चित्ते श्लेषभित्तिकाभेदा-ध्यवसायेन सरोविशेषे हंसीव हंसिका। परैरज्ञातत्वात् कप्रत्ययः॥ १३२॥

( ३६६ ) परा—व्यक्त करने की शक्ति शब्दों और उनके सम्बन्धों तथा शब्दार्थ पर ही आधारित होती है और निर्गुण ब्रह्म को शब्दों में 'शब्दब्रह्म' कहकर समाविष्ट कर लिया गया है, तो फिर ब्रह्म को लक्षणों से क्यों व्यक्त किया गया? (जैसा कि वेदान्तियों का कहना है) अस्तित्व आदि। ऐसा इसलिए किया गया, क्योंकि शब्द 'वैखरी' का स्वरूप अथवा आकार है। वे केवल ब्रह्म के विराट् स्वरूप को ही व्यक्त करते हैं। वे निरुपाधि अथवा निर्गुण ब्रह्म की प्रतीति नहीं कराते। इस प्रकार शंका का समाधान करने के लिए वाक् के चार स्वरूप बतलाये गये हैं।

यहाँ पर एक बात ध्यान में रखनी चाहिए कि प्रलय में जब जीवों के कर्म परिपक्व न होते हुए भी व्यक्त होने की अवस्था में आते हैं तो ब्रह्म को, जो माया से आबद्ध होता है और उन कर्मों से भी संयुक्त है, इसे 'घनीभूत' कहते है। यही कर्माभिन्न माया अर्थात् स्वयं माया कर्मरूप में है।

जब समय पर कर्म परिपक्व होने लगते हैं और अपरिपक्वता की पूर्व स्थिति नहीं रह जाती है, तो उस स्थिति को विचिकीर्षा कहते हैं। परिपक्व होते ही तुरन्त मायावृत्ति उत्पन्न होती है और ब्रह्म माया के प्रदत्त कर्मों के परिपक्व रूप में अव्यक्त कहलाता है। अतः स्मृतियों आदि में सृष्टि के कृत्य को अव्यक्त का कृत्य बतलाया गया है। कहा गया है—'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमेति।' अर्थात् हे द्विज श्रेष्ठ ! उसी से त्रिगुण अव्यक्त उत्पन्न होता है। वही अव्यक्त ब्रह्माण्ड का अंकुरित मूल होने के कारण बिन्दु कहलाता है। प्रपंचसार का कथन है—'विचिकीर्षुर्घनीभूता सा चिदभ्येति बिन्दुता।' अर्थात् 'घनीभूता विचिकीर्षा जो कर्म क्रिया के लिए लालायित थी, वही 'कारणबिन्दु' का स्वरूप अथवा बिन्दु स्थिति प्राप्त कर लेती है। यही चिति भी है।' इसी कारणबिन्दु से कार्यबिन्दु और नाद तथा बीज उत्पन्न होते हैं। इस प्रकार इन तीनों का प्रादुर्भाव हो गया। ये ही परा, सूक्ष्म और स्थूल पद कहे गये हैं और स्वाभाविक रूप में ये क्रमशः चित्, चिदचित् और अचित् कहलाते हैं। ये तीन और कारणबिन्दु मिलकर चार हो जाते हैं, ये चारों अधिदेवतारूप में अव्यक्त, ईश्वर, हिरण्यगर्भ और विराट् तथा चार शक्तियाँ—शान्ता, वामा, ज्येष्ठा और रौद्री, साथ ही अम्बिका, इच्छा, ज्ञान और क्रिया कही जाती हैं। अधिभूत ही कामरूप, पूर्णगिरि, जालंधर और ओड्याणपीठ रूपा हैं। ऐसा नित्यहृदयतन्त्र में वर्णन है।

आध्यात्म रूप में कारणबिन्दु का निवास मूलाधार में है और यहीं शक्ति-कुण्डलिनी है। इसे ही शक्ति, पिण्ड, द्विअक्षरी मंत्र आदि नामों से स्पष्ट किया गया है। लघुस्तव में आचार्य ने कुण्डलिनी के विषय में कहा है—'एक

शक्ति है, जिसे कुण्डलिनी कहते हैं। उसे जानकर जो भी सदैव ब्रह्माण्ड के सृष्टिकार्य में लगा रहता है, ऐसा जीव फिर कभी भी माँ के गर्भ में प्रवेश नहीं करता।' यह कारणबिन्दु की अभेदावस्था है। जब तीन बिन्दुओं ( कार्यबिन्दु आदि ) को उत्पन्न करने के लिए परिस्फुटित होता है, तब अव्यक्त नाद को ही 'शब्दब्रह्म' कहते हैं। यह नाद इसमें ही स्फुटित होता है। यह कारणबिन्दु से ही भेद रूप में अव्यक्त नाद है।

यही नाद कारणबिन्दु से तादात्म्य सम्बन्ध रखने के कारण सर्वव्यापी या असीम है किन्तु जब शरीर के मूलाधार में पहले वायु व्यक्त होता है और जब व्यक्ति बोलने का प्रयास करता है तो इस वायु पर आघात पड़ता है और उससे सर्वव्यापी शब्दब्रह्म का निष्पादन होता है। वही शब्दब्रह्म जो कारण-बिन्दु में है, जब व्यक्त होता है तो अपने स्थान में निष्पन्द रहता है और इसे परावाक् कहते हैं। वही शब्दब्रह्म जो उसी वायु से उत्पन्न हुआ था, जब वह वायु नाभि तक पहुँचती है तो उससे विमर्श रूप में मानस संयुक्त हो जाता है। इसमें व्यक्त कार्यबिन्दु की प्रकृति अथवा स्वभाव है, तब यह सामान्य स्पन्द प्रकाश या ज्योति रूप ले लेता है और इसे पश्यन्ती-वाक् कहते हैं। इसके आगे वही शब्द-'नाद'-ब्रह्म जो उसी वायु से उत्पन्न हुआ था, हृदय तक पहुँचता है, तब उसका निश्चयात्मिका बुद्धि से सहयोजन होता है। तब वह विशेष प्रकाश ले लेता है और मध्यमा कहलाता है। इसके पश्चात् यही शब्द-ब्रह्म जो उसी वायु से उत्पन्न हुआ था, मुख तक पहुँचता है। कण्ठादि स्थानों में विकसित होता हुआ अभिव्यक्त गति ग्रहण कर लेता है अर्थात् अकारादि वर्ण रूप में परिवर्तित हो जाता है। श्रोत्रग्रहण-योग्य स्पष्टतर प्रकाश और बीजात्मक होकर मुख से निःसृत होता है, इसे ही वैखरी कहते हैं। दूसरों की कर्णेन्द्रियाँ इसको ग्रहण कर सकती हैं। आचार्य ने इसकी व्याख्या करते हुए कहा है—'नाद जो प्रथम मूलाधार में उदय होता है उसे परा, आगे चलकर पश्यन्ती तथा जब वह हृदय तक पहुँचता है और उसमें निश्चयात्मक बुद्धि का संयोजन होता है तो मध्यमा और पूर्णतया व्यक्त होने पर वैखरी है। इस प्रकार स्पष्टतर नाद की निष्पत्ति वायु से होती है।' नित्यतंत्र का कथन है—'सर्वप्रथम परा मूलाधार में वायु से उत्पन्न होती है और उसी से नाद। वही वायु ऊर्ध्वगति लेकर स्वाधिष्ठान में व्यक्त होता है तो उसे पश्यन्ती कहा जाता है। पश्यन्ती रूप में वही वायु शनैः-शनैः ऊपर की ओर बढ़ता हुआ अनाहत में व्यक्त होता है जहाँ इसके साथ बुद्धितत्त्व का संयोजन होता है और इसे मध्यमा कहते हैं। यह फिर ऊर्ध्व रूप में कण्ठ तक, जो विशुद्ध है, पहुँचता है और कण्ठ से वैखरी रूप में निःसृत होता है।' इस प्रकार यद्यपि

वाक् की चार विधाएँ हैं, किन्तु जो मूढ़ प्रथम तीन विधाओं की जानकारी नहीं रखते हैं, वे वाक् को केवल वैखरी ही समझते हैं। श्रुति के अनुसार—'साधारण मनुष्य उसे ही वाक् मानते हैं जो अपूर्ण अथवा दोषयुक्त है।' अपूर्ण कहने का कारण यह है कि उन्हें पूर्वरूपों की जानकारी नहीं है। एक अन्य श्रुति ( ऋग्वेद १.१६४.४५ ) के अनुसार—'वाक् की चार निर्णीत अवस्थाएँ हैं; ज्ञानी ब्राह्मणों को उनका ज्ञान है। जिसके तीन रूप पूर्णतया गुह्य और निष्पंद हैं। प्राणी वाक् की चौथी स्थिति को बोलकर प्रकट करते हैं।' स्कन्द-यज्ञवैभवखंड में भी कहा गया है—

'अपदं पदमापन्नं पदं चाप्यपदं भवेत्।
पदापदविभागञ्च यः पश्यति स पश्यति ॥

अर्थात् 'अपद शब्दब्रह्म गति-रहित अथवा निष्पन्द पद हो जाता है ( अर्थात् वाक् के चार रूप ) और पद अपद हो जाता है। जो पद और अपद के इस विभाग को समझता है, वही सत्य में द्रष्टा है अर्थात् ब्रह्म के समान है।'

इस प्रकार श्रुति और स्मृतियों से यह परिणाम निकलता है, कि शब्द 'तत्' के 'परा' आदि चार भेद हैं। गौतमसूत्र ( २.२.६० ) में उल्लेख है—'पाद' वह है जिसका अन्त है। पाणिनिसूत्र ( १.४.१४ ) का भी कथन है—'पाद' वह है जिसका अन्त 'सुप्' या 'तिङ्' में होता है। इस सुप् के भी चार भेद हैं।

'परा' रूप में तत् शब्द अव्यक्त की प्रतीति कराता है, जो व्यक्त का कारण है और जिसमें तीन गुण हैं। वह उस निर्गुणब्रह्म का बोध नहीं कराता, जो उसके ऊपर अव्यक्त है। प्रश्न उठता है कि वैखरी रूप में 'तत्' शब्द ब्रह्म का प्रतीक कैसे हुआ ? यदि शब्द-तादात्म्य में ब्रह्म की प्रतीति कराने की शक्ति मान भी ली जाय तो 'तत्' इसे अप्रत्यक्ष में ही व्यक्त कर सकता है।

अथवा परा सर्वोच्च है। उन्हें परा इसलिए कहते हैं, क्योंकि वे वाक् के तीन निचले स्तरों से ऊपर हैं। त्रिपुरसिद्धान्त में परा शब्द की अनेक प्रकार से व्याख्या की गयी है। उल्लेख है—'एक गुरु हैं, जिनका नाम परानन्दनाथ था; जिनसे देवी अत्यन्त प्रसन्न थीं, अतः उन्हें परा कहते हैं। दूसरों के प्रति किये गये कार्यों से विशेष प्रसन्न होती हैं, अतः उन्हें परा कहा जाता है। वे महान् अनुग्रह भी करती हैं, अतः परा हैं। शाम्भवी को भी परा कहते हैं।

आगम के विद्वानों का मत है, कि बिन्दु शिवात्मक बीज शक्त्यात्मक तथा दोनों के समवाय से उत्पन्न होने वाला तत्त्व नाद कहलाता है। सत्-चिद्-

आनन्द विभु परमेश्वर के स्पन्द रूपी सङ्कुलन से शक्ति उत्पन्न होती है। फिर नाद और नाद से बिन्दु उत्पन्न होता है, जो साक्षात् पराशक्ति से युक्त है। अतः उन्हें परा कहते हैं।

वरिवस्यारहस्य में बिन्दु, अर्धचन्द्रिका, रोधिनी, नाद, नादान्त, शक्ति, व्यापिका, उन्मनी और समनी—इन नौ स्तरों की समष्टि को नाद की संज्ञा दी गयी है।

( ३६७ ) **प्रत्यक्चितीरूपा**—आन्तरिक चेतनारूपा। प्रत्यक्—आन्तरिक, वह जो अपने आत्मरूप को जानना चाहता है। रूप—आकार, अर्थात् अव्यक्त ब्रह्म उनका स्वरूप है।

( ३६८ ) **पश्यन्ती**—इसका एक दूसरा नाम भी है—उत्तीर्णा; अर्थात् ऊपर उठने वाली। सौभाग्यसुधोदय का कथन है—'वे अपने में ही सर्व को देखती हैं और वे कर्मों के मार्ग से भी ऊपर हैं, अतः उत्तीर्णा हैं। अतः यहाँ देवी को पश्यन्ती अथवा उत्तीर्णा नाम से सम्बोधित किया गया है—

'पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा।
तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता'॥

( ३६९ ) **परदेवता**—परा देवी। उन्हें सर्वोच्च शक्ति मानकर आराधना करनी चाहिए।

( ३७० ) **मध्यमा**—उनका निवास मध्य में है। कहा जाता है कि वे न तो पश्यन्ती के समान हैं और न वैखरी के समान बाहर की ओर बढ़ती हैं, अर्थात् इन दोनों के मध्य में हैं।

( ३७१ ) **वैखरीरूपा**—वैखरीरूप में। वैखरी—वी-अधिक, खर-कठोर अर्थात् वाक् अपने शरीर में। सौभाग्यसुधोदय के अनुसार—"व अर्थात् 'ई', निश्चित, 'ख' गुहा ( कर्णेन्द्रिय ) और 'र' जाना अथवा प्रविष्ट होना।" योग-सूत्रों के अनुसार—'उसे वैखरी इस कारण कहते हैं, क्योंकि उसका निष्पन्दन प्राण से होता है, अतः विखर कहते हैं।' एक अन्य मत के अनुसार वैखरी वाणी शब्द के अन्तिम स्तर के रूप में प्रसिद्ध है। इसका सहारा लेकर क्रमशः परावाक् तक चढ़ने और नाद में उसका भी अतिक्रमण करने की आवश्यकता है। वैखरी को विश्वविग्रहा भी कहते हैं।

( ३७२ ) **भक्तमानसहंसिका**—भक्तों के मानस में हंसरूप। जैसे हंसों का स्थान लौकिक रूप से मानसरोवर बतलाया जाता है, वैसे ही वे भक्तों के मानस ( चित्त ) रूपी सरोवर की हंसिका हैं।

**कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता।**
**शृङ्गाररससम्पूर्णा जया जालन्धरस्थिता॥ १३३॥**

कामेश्वरस्य शिवकामस्य प्राणनाडी जीवनाडीव । तदुक्तमाचार्यभगवत्पादैः—'करालं यत्क्ष्वेलं कवलितवतः कालकलना, न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमे'ति । कृते सुकृतदुष्कृते जानातीति कृतज्ञा । 'सूर्यः सोमो यमः कालो महाभूतानि पञ्च च । एते शुभाशुभस्येह कर्मणो नव साक्षिण' इत्युक्तनवकाभिन्नेति वा । कृतस्योपकारस्य ज्ञानेन प्रत्युपकर्त्री वा । कृतवत् ज्ञा ज्ञानं यस्या इति वा । कृतादियुगेषु धर्मस्येव ज्ञानस्याप्युत्तरोत्तरं ह्रासात्कृते यथा पूर्णं ज्ञानं तादृशज्ञानवतीत्यर्थः । यद्वा द्यूतशास्त्रे कृतत्रेताद्वापरकलिसंज्ञानि चत्वारि द्यूतानि प्रसिद्धानि । तानि चतुस्त्रिद्व्येकाङ्कघटितान्यपि दशषट्त्र्येकरूपाणि । पूर्वपूर्वद्यूते उत्तरोत्तरद्यूतानामन्तर्भावात् । तथा च श्रूयते—'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृत'मिति दशानां कृतसंज्ञा । अत एव कृतद्यूतं जितवता त्रेतादिद्यूतत्रयमपि जितं भवतीति द्यूतशास्त्रमर्यादापि । श्रूयते च 'कृतायविजितायाधरेऽस्याः संयन्ती'ति । अयो द्यूतक्रीडाकृतरूपोऽयो विजितो येन तस्मै अधरे तदधस्तना अयास्त्रेतादिक्रीडाः संयन्ति उपनमन्ते जिता भवन्तीति तदर्थात् । तेन कृतं यथा सर्वव्यापकमेवं सर्वविषयकं ज्ञानं यस्या इत्यर्थः । कृतं जानानीति वा । शिवेन सह द्यूतक्रीडायामवश्यं कृतज्ञत्वाद्देव्या एव जय इति ध्वन्यम् । कामेन मन्मथेन पूजितोपासिता । अत एव वारुणोपनिषदि 'पुत्रो निर्ऋत्या वैदेह अचेता यश्च चेतनः । स तं मणिमविन्द'दिति श्रूयते । लक्ष्म्याः पुत्रोऽनङ्गो विद्यारत्नं प्राप्तवानित्यर्थः । शृङ्गाराख्यरसेन सम्यक् पूर्णा । अथवा उत्तरत्र जालन्धरोड्याणपीठयोः परामर्शदर्शनादनयोर्नाम्नोः कामरूपं पूर्णगिरिपरत्वं नामैकदेशन्यायेनास्येयम् । सम्यक् पूर्णे आस्ते इति सम्पूर्णास् । आस्तेः क्विपि सत्वयत्वयलोपाः । शृङ्गपदेन द्विसङ्ख्या । अपरपदेन दलम् । रसाः षट् । द्विदलषट्कं द्वादशदलमनाहतचक्रमिति यावत् । अधिभूतं प्रसिद्धस्य पीठचतुष्कस्याध्यात्मं मूलाधारानाहतविशुद्धयाज्ञास्थिते तन्त्रेषु कथनाद् द्वादशदलेति पूर्णगिरिविशेषणम् । यद्वा शृङ्गं प्रधानभूतं अररं कवाटम् आवरकाविद्येति यावद्यस्याः सा शृङ्गाररा । सम्पूर्णेन ब्रह्मणा सहिता ससम्पूर्णा । उभयोः कर्मधारये शबलब्रह्मशुद्धब्रह्मोभयवतीति यावत् । जयस्वरूपत्वाज्जया । पाद्मे 'जया वराहशैले त्वि'ति परिगणिता । जालन्धरे पीठविशेषे स्थिता । पाद्मे 'जालन्धरे विष्णुमुखी'ति प्रतिपादितविष्णुमुख्याख्या ।। १३३ ।।

अथ नामपरिभाषामण्डले चतुश्चत्वारिंशत्पदानि विभजते—

> द्वे द्वे चेद्वेद्वेभवदोहदभुविलेशशीलजलमोहैः ।
> द्व्यर्धचतुर्भवगाः स्मो भुवि जलशोभा भगोलः खे ।। १७ ।।

अत्र तृतीयं द्वे इति पदं षडक्षरनामद्वयपरं इतराणि त्वष्टाक्षरपराणि । चतुःपदं चतुरक्षरकनामचतुष्टयपरम् ।। १७ ।।

में श्रीमाता का आवाहन करता हूँ। फिर उन्हें आसन दिया जाय और तैल-स्नान कराया जाय। अपनी सामर्थ्य के अनुसार ब्राह्मणों को भेंट भी दी जाय। पूजा के आरम्भ में ललितासहस्रनाम के प्रथम अध्याय का पाठ किया जाय और अन्त में फलश्रुति पढ़ी जाय। यदि एक साथ एक हजार ब्राह्मण न मिल सकें तो यह उत्सव कुछ दिनों तब तक चल सकता है, जब तक हजार की संख्या पूरी न हो जाय। अन्तिम दिन तक साधक को नियमपूर्वक अपनी प्रतिज्ञा का पालन करना चाहिए। त्रिशती भोज-समारोह में प्रत्येक दिन भोजन के साथ बीस ब्राह्मणों की पूजा करनी चाहिए। यह उत्सव शुक्लपक्ष के प्रथम दिन से आरम्भ होकर पूर्णिमा के दिन समाप्त कर देना चाहिए, क्योंकि १५ देवी-मंत्र १५ दिनों में २० ब्राह्मणों द्वारा पूर्ण हो जायेगें। यदि पर्याप्त संख्या में ब्राह्मण नहीं मिलते हैं, तो समय को बढ़ाया जा सकता है, किन्तु तीन सौ की संख्या पूरी की जाय। इसकी विस्तृत चर्चा बौधायनस्मृति पर आधारित 'भोजन-सहस्रविधि' में बतलायी गयी है।

ब्राह्मण—ऐसे ब्राह्मण जो विद्वान् और ज्ञानवान् हों, अन्य नहीं। षड्रसैः—भोजनकुतूहल और सूदशास्त्र में इनका वर्णन है।

साम्राज्य—पूर्णकैवल्य। उपनिषद् के ज्ञाताओं की यह मान्यता है, कि सृष्टि-कृत्य के अतिरिक्त अन्य सभी कृत्यों में कैवल्य-प्राप्त ( मुक्त ) पुरुषों का ही अधिकार हो जाता है। ऐसा वेदसूत्र ( ४ ) में बतलाया गया है।

**निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम्।**
**ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ॥ २९७ ॥**

एवं पञ्चत्रिंशता श्लोकैः पुरुषार्थप्रदायकत्वदर्शनेन रहस्यतमत्वविवेचने समाप्ते क्रमप्राप्तं 'इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायक'मित्युक्तमर्थं विवेचयति—निष्काम इति। निष्कामः विषयकामनारहितः। ब्रह्मज्ञानं जीवब्रह्मणोरभेद-भ्रमनिवर्तकं महावाक्यजन्यमात्ममात्रविषयकं निर्विकल्पाख्यं चरमवृत्तिरूपमनु-भवात्मकं ज्ञानं, येन प्राप्तेन ज्ञानेन बन्धनादनादिसिद्धाहन्ताममताविरूपवासना-जालान्मुच्यते। अयम्भावः—नामकीर्तनस्य नित्यप्रयोगारम्भे उपात्तदुरितक्षयार्थ-मित्युल्लेखस्य स्थाने यदि श्रीत्रिपुरसुन्दरीप्रीत्यर्थमित्युल्लिख्येत तावतैव ब्रह्मज्ञान-लाभ इति। न च काममोल्लेखे कथं निष्कामप्रयोगतेति वाच्यम्। विषयकाम-नोल्लेख एव सकामत्वव्यवहारात्। अत एव विशिष्टानां परमेश्वरप्रीत्यर्थमित्यु-ल्लिखिते कर्मणि निष्कामत्वव्यवहारः। दुरितहरप्रयोगस्य त्वनेन प्रसङ्गात्सिद्धिः। 'श्रीमातुः प्रीतये नामसहस्रं यस्तु कीर्तये'दित्यनुक्त्वा निष्काम इत्युक्तेरीदृश-प्रयोगशीलः कदापि विषयकामप्रयोगं न कुर्यादिति ध्वननाय। तदुक्तं 'नित्य-नैमित्तिकैरेव कुर्वाणो दुरितक्षय'मिति ॥ २९७ ॥

यदि कोई साधक इस सहस्रनाम स्तोत्र का पाठ निष्काम भाव से करता है तो उसे ब्रह्मज्ञान की प्राप्ति होती है, जिसे प्राप्त कर वह सम्पूर्ण दुःखों के बन्धनों से मुक्त हो जाता है।

ब्रह्मज्ञान—वह ज्ञान जिससे जीव और ब्रह्म के भेद की भ्रान्ति दूर हो जाती है। महावाक्यों से ज्ञान का उदय हो जाता है, जिनका लक्ष्य केवल आत्मज्ञान है और यही अन्तिम मानसिक रूपान्तरण है। इसकी केवल अनुभूति ही होती है।

मुच्येत बन्धनात्—अनादिकाल से वह जिस अपने-पन के पाश में बँधा था, इससे उसे मुक्ति मिल जाती है।

**धनार्थी धनमाप्नोति यशोर्थी प्राप्नुयाद्यशः।**
**विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ॥ २९८ ॥**

**ननु निष्कामप्रयोगशीलस्यापि प्रमादादिभिः सकामप्रयोगे प्रवृत्तौ किं स्यादत आह—धनार्थीति। विद्यार्थी वेदशास्त्राद्यपरिमितविद्याकामः नतु श्रीविद्याकामः। तत्प्राप्तेः पूर्वमत्राधिकाराभावेनानधिकरिणा कृतस्यापि प्रयोगस्याकृतत्वेन निष्फलत्वात् प्रत्युतानर्थस्मरणाच्च। विषयकामनासामान्याभावो हि निष्कामत्वम्। मध्ये विषयकामनायाः सकृदप्युदये तु निष्कामत्वमेव व्याहन्येत। बुद्धिचाञ्चल्येनोभयथापि प्रयोगकरणे तु निष्कामप्रयोगोऽपि कामनायामेवोपक्षीण इति तत्तत्फलान्येवाप्नोति न ब्रह्मज्ञानमिति भावः। अथवा विद्याशब्दो ब्रह्मज्ञानपर एव। अम्बाप्रीत्यर्थमितिवद् ब्रह्मज्ञानप्राप्त्यर्थमित्युल्लेखेऽपि तल्लभ्यत इत्यर्थः। धनयशसोर्ग्रहणं तु दृष्टान्तार्थम्। यथा धनार्थी धनमाप्नोतीत्यादिरर्थः। एतेनोत्तरोत्तरोत्कृष्टफलकप्रयोगप्रस्तावे सर्वोत्तरप्रयोगानन्तरं धनकामादिप्रयोगकथनमसमञ्जसमिति निरस्तम् ॥ २९८ ॥**

यदि सहस्रनाम का पाठ करने वाला व्यक्ति सम्पत्ति की कामना करता है तो उसे सम्पत्ति प्राप्त होती है, यदि यश की कामना करता है तो उसे यश प्राप्त होता है और यदि विद्या की कामना करता है तो उसे विद्या की प्राप्ति हो जाती है।

**नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने।**
**कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ॥ २९९ ॥**

**ईदृशमिदं स्तोत्रं यं निष्कामप्रयोगमारभ्य ततश्च्युतोऽपि न प्रत्यवैति प्रत्युत यद्यदिच्छति तत्तदाप्नोत्येव। अतः कथमेतेन सदृशमन्यत्स्तोत्रं स्यादित्याह—नानेनेति। भोगप्रयोगाच्च्युतस्य मोक्षं मोक्षप्रयोगाच्च्युतस्य भोगमुभयापेक्षस्योभयं तत्राप्यादौ भोगं पश्चान्मोक्षं प्रददातीत्यर्थः। ब्रह्माण्डपुराणेऽप्युक्तम् 'तस्माद-**

शेषलोकानां त्रिपुराराधनं विना। न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित्। तन्मनास्तद्गतप्राणस्तद्याजी तद्गतेहकः। तदात्मैक्येन कर्माणि कुर्वन्मुक्तिमवाप्स्यसि। एतद्रहस्यमाख्यातं[1] सर्वेषां हितकाम्यये'ति। अथवा पूर्वश्लोकस्य ब्रह्मज्ञानप्रदत्वव्याख्यापक्षे तत्साधनवैराग्यप्रदत्वमनेन श्लोकेनोच्यते। भोगेभ्यो विषयाभिलाषेभ्यो मोक्षो मोचनं तद्वासनात्यागस्तं प्रददातीत्यादिरर्थः। उक्तञ्चाष्टावक्रगीतायाम् 'मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यजे'ति ॥ २९९ ॥

हे मुनिवर ! इस स्तोत्र की समता में कोई दूसरा स्तोत्र नहीं है, जो एक साथ सांसारिक भोगों तथा मुक्ति को प्रदान करता हो। इसलिए भोग और मोक्ष को चाहने वाले पुरुषों को इसका पाठ अवश्य करना चाहिए।

ज्ञान—वेदों और शास्त्रों आदि का असीमित ज्ञान; किन्तु श्रीविद्या का नहीं, क्योंकि श्रीविद्या का ज्ञान केवल गुरु से ही प्राप्त करना चाहिए। यदि कोई इसके बिना ही इन प्रयोगों को करता है, तो उसे इच्छित कार्य से तो हाथ धोना ही पड़ता है, साथ ही वह विपत्ति में भी फँस सकता है।

**चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा।**
**स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ॥ ३०० ॥**

किं बहुना तन्त्रोक्तकर्मसु भराभावेन ये श्रौतस्मार्तकर्मस्वेवातीवाचरणादरणशीलास्तेषामप्येतदुपकारकमित्याह—चतुरेति। ब्रह्मचारिगृहस्थवानप्रस्थयतयस्तत्तदवान्तरभेदाश्चतुराश्रमनिष्ठास्तैः स्वस्वधर्माणां सम्यग्यथाशास्त्रमनुष्ठाने क्रियमाणे यदवश्यम्भावि वैकल्यं वैगुण्यं तस्य परिपूर्तये समाधानायेति तादर्थ्ये चतुर्थी। चतुराश्रमिणां यानि यानि कर्माणि श्रुतिस्मृतिविहितानि तानि तानि सर्वाणि सर्वाङ्गोपसंहारसमर्थस्यैव फलप्रदानि। सर्वाङ्गोपसंहारश्च प्रायेणाधुनिकानामशक्यतमः। तदिदमस्माभिः प्रदर्शितं शिवस्तवे 'स्वामिन्नङ्गेषु सर्वेष्वपि सुविरचितेष्वेव कर्माणि किञ्चित्तुच्छं यच्छन्ति नो चेन्निरयदुरवटे संशयं वासयन्ति। मन्त्रैर्यन्त्रार्थबोधान्गुरुकुलनियमान्देशकालार्थशोधाद्गाढं गूढश्च तत्त्वात्कथमतिकठिनोपेयुषी शेमुषी नः' इति। ततश्च दुःखगाहाङ्गलोपस्यावश्यकतया तज्जनितपापनिरासद्वारा साद्गुण्यसम्पादनायेदं सर्वेषामावश्यकमिति भावः। उक्तञ्च देवीभागवते तृतीयस्कन्धे देवान्प्रति भगवत्या 'मन्नामोच्चारणात्सर्वे मखेषु सकलेषु च। सदा तृप्ताश्च सन्तुष्टा भविष्यध्वं सुराः किले'ति। इत्थञ्च संयोगपृथक्त्वन्यायेनास्य क्रत्वर्थपुरुषार्थोभयरूपतासिद्धिः ॥ ३०० ॥

जो चारों आश्रमों ( ब्रह्मचर्य, गृहस्थ, वानप्रस्थ और सन्यास ) में हैं, उन्हें

---

[1] तद्रहस्यकः इति पाठः।

अपने अनुष्ठान में जो न्यूनता रह गयी हो, उसकी पूर्ति के लिए इसे पढ़ना चाहिए।

चतुराश्रम—अपने दैनिक कार्यों की पूर्ति करने में साधारणतया कोई न कोई कमी रह ही जाती है, तो उसे पूरा करने लिए इस सहस्रनाम का पाठ करना चाहिए, क्योंकि यह एक प्रकार से अनुशासनात्मक प्रायश्चित्त ही है।

**अथ परिभाषायां विंशतिश्लोकान् व्याचष्टे—**

नामस्मरणावश्यकतोक्तिः सार्धत्रयोदशश्लोकैः।
उपसंहारः सार्धैः पञ्चभिरेकेन सूतोक्तिः ॥ ३९ ॥

**अत्र चरमश्लोकस्यैकस्य सूतोक्तिरूपताकथनेन ततः पूर्वेषां हयग्रीवोक्तिरूपतैवेति द्योतितम् 'दशभूः सार्धनृपाला' इति वक्तृनिर्णायकश्लोके चरमस्थाने हयग्रीवस्यैव कथनात् तत्परत एतदवधिपर्यन्तमन्यस्य कस्यापि वक्तृत्वेन परिगणनाभावाच्च। तत्रैवाप्युष्टमित्युक्तिस्तु पूर्वभागाभिप्रायेणेत्यविरोधः ॥ ३९ ॥**

३९वाँ परिभाषा श्लोक : (शेष बीस श्लोकों का) १३½ श्लोक यह स्पष्ट करते हैं कि पाठ आवश्यक है, ५½ श्लोक पुस्तक को समाप्त करते हैं और अन्तिम श्लोक सूत का है।

सूत के कथनानुसार इस अन्तिम श्लोक को छोड़ कर अन्य सभी श्लोक हयग्रीव के हैं।

**कलौ पापैकबहुले धर्मानुष्ठानवर्जिते।**
**नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥ ३०१ ॥**

**नन्वङ्गलोपप्रतिसमाधानाय प्रायश्चित्तान्यपि तत्र तत्रैव विहितानीति तैरेव साद्गुण्यसिद्धौ किमनेन सहस्रनामस्तोत्रेणेत्यत आह—**कलाविति। **पापैकबहुले चतुष्पादस्य धर्मस्य पादत्रये पापेन लुप्ते। मुक्त्वेति विनार्थकमन्वयान्तरमखण्डं न तु क्त्वाप्रत्ययान्तम्। मोचनकर्तृकक्रियान्तराभावेन तथात्वायोगात्। स्थितानामिति शेषपूरणेनायनक्रिययैव वा समाधेयम्। नामान्यनादृत्य स्थितानां स्वस्वसाङ्गकर्मानुष्ठानतः पततामित्यर्थः। अन्यत् श्रुतिस्मृतितन्त्रोदितं प्रायश्चित्तं न परायणं नाश्रयः। न वैकल्यपरिपूरकमिति यावत्। नामानुकीर्तनं तु भवति तथा। 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम्। यत्कृत्यं तन्न कृतं यदकृत्यं कृत्यवत्तदाचरितम्। उभयोः प्रायश्चित्तं शिव तव नामाक्षरद्वयं कथितम्। किमन्येन मुनिश्रेष्ठाः प्रायश्चित्तेन कर्मणा। प्रायश्चित्तमघौघस्य देवीनामानुकीर्तन'मित्यादिवचनात्। किञ्च अत्र तृतीयवचने प्रायश्चित्तस्य कर्मणेति विशेषणेनैतत्सूचितम्—प्रायश्चित्तानामपि कर्मविशेषरूपत्वात्तेषामपि साङ्गानामेव फलजनकत्वं वाच्यम्। साङ्गता तूक्तरीत्या**

दुःशकैव । तत्रापि प्रायश्चित्तान्तरगवेषणेऽनवस्था । न च नामस्मरणस्यापि प्रायश्चित्तरूपकर्मत्वाविशेषात्साङ्गतायै प्रायश्चित्तान्तरगवेषणं तुल्यमिति वाच्यम् । दुरवगाहाङ्गान्तरनिरपेक्षस्यैव नामस्मरणमात्रस्य पापापनोदकत्वात् । तदुक्तं विष्णुभागवते—'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदु'रिति । साङ्केत्यं पुत्रादिनाम । स्तोभोऽर्थहीनः शब्दः । शिवरहस्येऽपि 'अवशेनापि यन्नाम्नः कीर्तनान्मुच्यते नरः । स कथं न महादेवः सेव्यते बुद्धिशालिभि'रिति । देवीभागवते तृतीयस्कन्धे—'अस्पष्टमपि यन्नाम प्रसङ्गेनापि भाषितम् । ददाति वाञ्छितानर्थान्दुर्लभानपि सर्वथे'ति । शक्तिरहस्येऽपि—'मदात्प्रमादादुन्मादाद्दुःस्वप्नात्स्खलनादपि । कथितं नाम ते गौरि नृणां पापापनुत्तय' इति । मदः सुरापानादिजन्यः । प्रमादोऽनवधानता । उन्मादो भूताद्यावेशः । उत्स्वप्नो निद्रादशायामभिलापः । स्खलनं किञ्चिद्वक्तुं प्रवृत्तस्य मुखात्तदतिरिक्तशब्दनिःसरणम् । किञ्च अस्ति हि महाभाष्ये प्रसिद्धः कूपखानकन्यायः—'तृषानिवृत्तिपङ्कलेपनिरासफलकस्य कूपस्य खननेऽपि जायेत एव तृषापङ्कलेपौ तावपि सिद्धकूपे तज्जन्यजलेन नश्यत एवेति राजन् ङस् पुरुष सु इत्याकारकापशब्दप्रयोगजन्यं पातकं तज्जन्यराजपुरुषेति परिनिष्पन्नरूपप्रयोगेण नश्यतीति स्वीकारात् । तेन न्यायेन प्रकृतेऽपि नामस्मरणनाश्यतावच्छेदकपापत्वावच्छिन्नत्वाविशेषान्नामस्मरणाङ्गलोपजन्यपातकस्यापि तेनैव नामस्मरणेन नाश इति नानवस्था । अनेनैवाशयेन ग्रन्थान्तेऽस्माभिर्वक्ष्यते 'तथाप्यन्तः सन्तः सदयहृदयानाममहिमाप्यपूर्वस्तस्मान्मे न खलु खलपापोभयभय'मिति । अपूर्वः स्वाङ्गलोपजनितपातकनिवर्तकरूपः । पूर्वं प्रायश्चित्तादिकर्मसु क्वाप्यक्लृप्त इति तदर्थः । न च श्रौतस्मार्तादिप्रायश्चित्तसाङ्गतायै नामकीर्तनस्योपयोगोऽस्त्विति वाच्यम् । तद्धेतोरेवास्तु तद्धेतुत्वं किं तेनेति न्यायविरोधात् । तदिदं सर्वमुक्तमास्माकीनशिवस्तवे 'वेधा वैधापराधानपि शिव बहुधा तान्समाधातुमाधात्प्रायश्चित्तानि वित्ताधिपजनसुविधेयानि वैषम्यभाञ्जि । कच्छेऽपच्छेदमाप्ते पुनरपि यजनं पूर्णयज्ञान्तराये त्वेकाल्पाज्येन पूर्णाहुतिरिति बहुशस्तत्त्वमेतन्न जाने ।। कृत्यस्याकरणेऽप्यकृत्यकरणेऽप्युक्तं पुराणादिषु प्रायश्चित्तगणे परं शिवशिवेत्युच्चारणं भक्तितः । कृत्वा कर्म महेश तत्प्रतिसमाधानाय चेत्त्वत्स्मृतिः सादावेव कृता न तारयति किं तस्मात्त्यजामि क्रियाः' इति । कर्मणः समाधानाय प्रायश्चित्तं तस्यापि समाधानान्तरं प्रति समाधानमित्यर्थः । तस्मान्नामानुकीर्तनमेव परायणमिति भावः ।। ३०१ ।।

कलिकाल में पूर्णतया धर्म का पालन नहीं हो पाता है और लोगों की पूजा आदि में कुछ-न-कुछ थोड़ी-बहुत कमी रह ही जाती है, ऐसी स्थिति में इसकी पूर्ति के लिए सहस्रनाम के अतिरिक्त अन्य कोई मंत्र नहीं है ।

लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ।
विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ॥ ३०२ ॥

ननु नामकीर्तनसामान्यस्य पापक्षयजनकत्वे प्रकृते किमायातमित्याशङ्क्य सर्वेषां पुण्यवन्नाम्नामविशेषेण पापनाशकत्वेऽपि तमोहराणां खद्योताग्निचन्द्रसूर्यादीनां तेजसामिवास्ति तारतम्यं तत्रैवैतदेव सर्वातिशायीति कथनाय सारालङ्कारेण भूमिकाभेदान्वर्णयति—लौकिकादिति । लौकिकादित्यध्युष्टैः घटपटादिशब्दप्रयोगेऽप्यस्त्येव पुण्यम् । 'एकः शब्दः सम्यग्ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति वचनात् तादृशशब्दसहस्रोच्चारणमपेक्ष्य विक्रमार्कादिपुण्यश्लोकमनुजवाचकस्यैकस्य शब्दस्योच्चारणं विशिष्टफलदम् । उक्तञ्च विष्णुभागवते—'ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् । उत्थायापररात्रान्ते प्रयताः सुसमाहिताः । स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिला'दित्यादि, तादृशनामसहस्रकीर्तनमपेक्ष्येति लौकिकाद्वचनादित्यस्यार्थः । विष्णुनामेति विष्णूनां नामेति विग्रहः । अनन्तसङ्ख्यानां विष्णूनां मध्ये यस्य कस्यचिदन्यतमस्यापि नामैकवचनादेकमपीत्यर्थः । अनुकीर्तनमित्यस्यानुकीर्त्यमानमित्यर्थः । अनुसृतं कीर्तनं यस्येति विग्रहात् । इदञ्च पदं शिवनामादिषूत्तरत्राप्यनुवर्तते । शिवानां नाम रुद्रेश्वरशिवमहेश्वरसदाशिवानां नाम । वातुलशुद्धे तत्त्वभेदपटले 'शिवमेकं विजानीयात्सादाख्यं पञ्चधा भवेत् । महेश्वरो महासेनः पञ्चविंशतिभेदवा'नित्यादिनान्यत्र च तद्भेदा उक्ता अनुसन्धेयाः । अयम्भावः—विष्णूनामानन्त्येऽप्येकैव भूमिका । रुद्रादीनां तूत्तरोत्तरं भूमिका भिद्यन्ते । तास्वप्येकैकस्यां रुद्रादेरानन्त्यमेवेति द्योतनाय विष्णुपदसमानयोगक्षेमगुणिवाचकम् । 'महेश्वरो महासेनः पञ्चविंशतिभेदक' इत्यादिनान्यत्र च तद्व्यूहा उक्ता अनुसन्धेयाः । रुद्रपदमनुक्त्वा सर्वानुस्यूतं शिवपदं प्रयुक्तम् । तेन विष्णुनाम ततः परं रुद्रनाम ततः परमीश्वरीनामेत्याद्या भूमिका उन्नेयाः । इयांस्तु विशेषः । विष्णूनां तरतमभावापन्नत्वेनानन्त्याद्यथाकथञ्चिदपि तन्नामोच्चारणं समानफलकमेव । शिवानां तु तरतमभावेनाप्यानन्त्यात्परस्परनामसाङ्कर्याच्च तादृशतादृशभूमिकापदार्थानुसन्धानपुरःसरं कीर्त्यमानं नाम तथातथोत्तममिति । अथवा विष्णुरप्यादित्यादिगणान्तर्गतत्वादिरीत्याप्यनन्तविध एवेति तथापि नामसङ्करेऽर्थानुसन्धानत एव विशेषो वेदितव्यः । तत्तदसाधारणशब्दास्तु यथाकथञ्चित्कीर्त्यमाना अप्युत्तमा एव । अत एव परशिवे शिवादिशब्दा मुख्या इत्युक्तं सूतसंहितायाम्—'नामानि सर्वाणि तु कल्पितानि स्वमायया नित्यसुखात्मरूपे । तथापि मुख्यास्तु शिवादिशब्दा भवन्ति सङ्कल्पनया शिवस्ये'ति । विष्णुनामभ्यो रुद्रादिनाम्नामुत्तमत्वमपि । तत्रैव यमं प्रति शतानन्दमुनेर्वाक्यम् 'शिवरुद्रादिशब्दान्यो विशिष्टान्वेद मानवः । नारायणादिशब्देभ्यस्तं त्वं परिहर प्रभु'मिति । पराशरपुराणेऽपि—'देवताभ्यः समस्ताभ्यः

स्रष्टा ब्रह्मा परः स्मृतः। ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः। विष्णोरपि परः साक्षाद्रुद्रः संहारकारक' इति। सूतगीतायामपि 'त्रिषु रुद्रो वरिष्ठः स्यात्ततो-मायी परः शिवः। मायाविशिष्टात्सर्वज्ञात्साम्बः सत्यादिलक्षणः। वरिष्ठो मुनयः साक्षाच्छिवो नात्र विचारणा। शिवाद्वरिष्ठो नैवास्ति मया सत्यमुदीरित'-मिति। अत्र मायीतिपदेनेश्वरशिवमहेश्वरसदाशिवा अभेदेन गृहीताः। 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः पादमूले व्यवस्थिता' इतीश्वराद्भेदेन मध्ये सदाशिवस्य कीर्तनात्। 'शिवात्मके महामञ्चे महेशानोप-बर्हणे। अतिरम्यतले तत्र कशिपुश्च सदाशिवः। भृतकाश्च चतुष्पादा महेशश्च पतद्ग्रहः। तत्रास्ते परमेशानी महात्रिपुरसुन्दरी'ति भैरवयामले कामेश्वराति-रिक्तानां षण्णां कीर्तनात्। भृतका भृत्याः। द्रुहिणहरिरुद्रेश्वरा इति तदर्थात् बहुरूपाष्टकप्रस्तारादिष्वप्येवमेव। साम्ब इत्यस्य त्रिपुरसुन्दर्यभिन्नः कामेश्वर-शिवोऽर्थः सत्यादिलक्षण इति। तानि च कौर्मे—'सत्यं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम्। योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम्॥ आनन्दगं परं ब्रह्म केवलं निष्कलं परम्। परात्परतरं तत्त्वं शाश्वतं शिवमव्ययम्॥ अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम्। शुभ्रं निरञ्जनं शुद्धं निर्गुणं दैन्यवर्जितम्॥ आत्मोपलब्धि-विषयं देव्यास्तत्परमं पद'मिति। एवं स्थितेऽप्येतेषां नामतो रूपतश्चावान्तरभेदे तत्त्वत ऐक्यान्नाम्नामपि साङ्कर्यात्तत्प्रतिपादकपुराणानां पार्थक्याभावाच्च शिव-नामैकमित्येवोक्तम्। अनेनैवाशयेन शक्तिरहस्यादौ 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते। पितामहसहस्राणि विष्णोरेका घटी मता। विष्णोर्द्वादशलक्षाणि निमेषार्धं महेशितुः। दशकोटयो महेशानां श्रीमातुस्त्रुटिरूपका' इत्यादौ विष्णुदेव्योर्मध्ये महेश एवोक्तः। ननु विष्णोरुत्कर्षप्रतिपादकानि वचनानि विष्णुपुराण-विष्णुभागवत-बृहन्नारदीयादिषु भूयांस्येव दृश्यन्त इति चेत्। सत्यं दृश्यन्ते, परन्तु तानि परत्वेन सह तात्त्विकैक्याभिप्रायेणेत्यविरोधः। तदप्युक्तं पराशरोपपुराणे—'वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते। रुद्रस्यासौ हरस्यास्य विभूतेरेव केवल'मिति। तथा सूतसंहितायाम्—'विष्णुप्रजापतीन्द्राणा-मुत्कर्षं शङ्करादपि। प्रवदन्तीव वाक्यानि श्रौतानि प्रतिभान्त्यपि॥ तानि तत्त्वात्मना तेषामुत्कर्षं प्रवदन्ति हि। विष्णुप्रजापतीन्द्रेभ्यो रुद्रस्योत्कर्ष-मास्तिकाः॥ वदन्ति यानि वाक्यानि तानि सर्वाणि हे द्विजाः। प्रवदन्ति स्वरू-पेण तथा तत्त्वात्मनापि च॥ नैवं विष्ण्वादिदेवानामिमिति तत्त्वव्यवस्थिति'रिति। अत्र रुद्रपदेन साम्बः कामेश्वर उच्यते। विष्ण्वादिदेवानामित्यादिपदेन विष्णु-देव्योर्मध्यपातिनः सर्वेऽपि शिवा उच्यन्ते। तेषां चेयत्तातिरहस्यत्वाद्गुरुमुखैक-वेद्या। न चैवं सति विष्ण्वादेरविनाशित्वबोधकवचनजातविरोधः। तस्यापि तत्त्वदृष्ट्यैव 'अहं मनुरभवं सूर्यश्चे'त्यादिवामदेववचनवदुपपत्तेः। अस्मदाद्यपेक्षया

चिरतरजीवित्वेन स्वरूपतोप्युपपत्तेश्च। तदुक्तं मत्स्यपुराणे—'शतायुः पुरुषो यस्तु सोऽनन्तः स्वल्पजन्मनः। जीवतो योऽमृतश्चाग्रे तस्मात्सोऽमर उच्यते। अदृष्टजन्मनिधनेष्वेवं विष्ण्वादयो मता' इति ॥ ३०२ ॥

लौकिक वचनों से महत्त्वपूर्ण विष्णुसहस्रनाम का कीर्तन करना है और उससे भी महत्त्वपूर्ण है, उत्तम शिवनाम का स्मरण करना।

लौकिकाद् वचनात्—विष्णुभागवतपुराण का कथन है कि 'जब परम्पराओं से अथवा हँसी-मजाक में बिना समझे-बूझे और बिना किसी अपमान की भावना के यदि कोई विष्णुसहस्रनाम का पाठ करता है, तो कहा जाता है कि उससे समस्त पापों से मुक्ति मिल जाती है।' शिवरहस्य तथा देवीभागवतपुराण आदि में यही बात कही गयी है। शिव तथा देवी के नामों के विषय में भी क्रमशः यही बात चरितार्थ होती है।

**शिवनामसहस्राच्च देव्या नामैकमुत्तमम्।**
**देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥ ३०३ ॥**

एवं कामेश्वरस्याधिक्ये सिद्धे तदभेदादेव तच्छक्तेर्देव्याः पूर्वेभ्य उत्तमत्वं सिद्धमेव। परस्परमपि 'शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यत' इत्यादि-तन्त्रवचनेषु 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितु'मित्यादिना सौन्दर्य-लहर्यां च कथयितुं युक्त्यैव सर्वानुभवसिद्धया शिवोत्कर्षस्य शक्तिमूलकत्वे सिद्धे 'तद्धेतोरेवास्त्वि'ति न्यायेनाम्बाया एव सर्वोत्तमत्वं सिद्ध्यतीत्याशयेनाह—शिवेति। देव्यास्त्रिपुरसुन्दर्याः परशिवाभिन्नाया नामेत्यसमस्तोक्तिर्देव्यानन्त्य-भ्रमनिरासाय। तेन वातुलशुद्धतन्त्रे—'शिवस्य तु परा शक्तिः सहस्रांशसमुद्भवः। पराशक्तेः सहस्रांशादादिशक्तिसमुद्भवः। आदिशक्तिसहस्रांशादिच्छाशक्तिसमु-द्भवः। इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भवः। ज्ञानशक्तिसहस्रांशात्क्रिया-शक्तिसमुद्भव' इत्यादिनोक्तानां पराशक्त्यादीनां नामग्रहणम्। देव्याश्च सर्वोत्त-मत्वं त्रैपुरेषूपनिषत्कदम्बेषु निवेदयन् देवतायै महत्यै इत्येवासकृद्व्यवहाराच्छिवा-द्युत्पादकत्वश्रवणाच्च स्पष्टमेव। कर्मकाण्डेऽपि प्रसङ्गाद्देवतान्तरानुवादप्रसक्तौ सत्यामन्येषां देवानां तत्तदसाधारणसंज्ञयैवानुवादप्रायपाठे 'महत्यै वा एतद्देवतायै रूपं महतीमेव तद्देवतां प्रीणाती'त्यादिव्यवहाराच्च। रुद्रयामलेऽपि—'अनेकजन्म-पुण्यौघैर्दीक्षितो जायते नरः। तत्राप्यनेकभाग्येन शिवविष्णुपरायणः॥ तत्राप्य-नेकपुण्यौघैः शक्तिभावः प्रजायते। महोदयेन तत्रापि सुन्दरीभावतां व्रजेत्॥ तत्रापि च तुरीयाख्या भाग्यैरन्तर्गता भवेत्। नामसङ्कीर्तनं तस्यास्तत्राप्यति-सुदुर्लभम्॥ यत्र जन्मनि सा नित्या प्रसन्ना नामकीर्तनात्। जीवन्मुक्तिर्भवेत्तत्र कर्तव्यं नावशिष्यत' इति॥ एवं स्मृतिष्वपि 'ब्रह्मणो हृदयं विष्णुर्विष्णोरपि शिवः

स्मृतः। शिवस्य हृदयं सन्ध्या तेनोपास्या द्विजातिभि'रिति कश्यपादिवचनैः कौर्मपाद्मस्कान्दादिनिखिलपुराणेषु च तत्र तत्र देवीकालिका ब्रह्माण्डमार्कण्डेयादि-पुराणेषु बहुशः शक्तिरहस्यदेवीभागवततृतीयस्कन्धादिषु चैदम्पर्येण सर्वत्र ज्ञाना-र्णवकुलार्णवादितन्त्रेषु त्वपरिमिततया वर्णितमिति तद्वेदितॄणां स्पष्टमिति नेह प्रतन्यते॥ ३०३॥

विष्णु के सहस्रनामों की अपेक्षा शिव के नाम को श्रेष्ठ बतलाया गया है। शिव के सहस्रनामों की अपेक्षा देवी के एक नाम को श्रेष्ठता दी जाती है। हे कुम्भज! देवी के करोड़ों सहस्रनाम प्राप्त होते हैं।

एक अन्य स्थान पर बतलाया गया है कि शिव शक्ति के बिना कुछ भी नहीं कर सकते। शक्ति के बिना वे शव हैं। सौन्दर्यलहरी में आचार्य ने इसका स्पष्ट उल्लेख किया है।

स्मृति में उल्लेख है—'ब्रह्म का हृदय विष्णु हैं, विष्णु का हृदय शिव कहे जाते हैं और शिव का हृदय सन्ध्या ( देवी ) हैं।' कूर्म, पद्म, मार्कण्डेय तथा अन्य पुराणों में भी इसका अनुमोदन किया गया है।

> तेषु मुख्यं दशविधं नामसाहस्रमुच्यते।
> रहस्यनामसाहस्रमिदं शस्तं दशस्वपि॥ ३०४॥

तेषु कोटिषु। दशविधं 'एते दशस्तवा गङ्गाश्यालका बालरासभा' इत्यभि-युक्तैः सङ्गृहीतप्रकारदशकवत्। अत्र गङ्गाद्यक्षरदशकं सहस्रनामदशकस्याद्या-क्षररूपम्। 'मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्। अनापलिङ्गकूस्कं च पुराणानि पृथक्पृथ'गिति देवीभागवतस्थश्लोक इव 'नामैकदेशे नामग्रहण'मिति न्यायसिद्धम्। चरमो भकारो ह्रस्व एव। दीर्घपाठस्तु बहुवचनप्रयुक्तः। ततश्च 'गङ्गा भवानी गायत्री काली लक्ष्मीः सरस्वती। राजराजेश्वरी बाला श्यामला ललिता दश' इति तदर्थः। त्रिपुरसुन्दर्या एव तन्त्रभेदेन सहस्रनामदशकमस्तीत्यप्याहुः। शस्तं प्रशस्तम्॥ ३०४॥

उन सहस्रनामों में भी दस नाम मुख्य हैं और उनमें भी रहस्यनामसाहस्र सभी में श्रेष्ठ हैं।

ये नाम इस प्रकार हैं—१. गंगा, २. भवानी, ३. गायत्री, ४. काली, ५. लक्ष्मी, ६. सरस्वती, ७. राजराजेश्वरी, ८. बाला, ९. श्यामला और १०. ललिता। जिन्हें गं, भ, गा, का, ल, स, रा, बा, श्या और ल इन दस नामों से स्पष्ट किया गया है।

> तस्मात्सङ्कीर्तयेन्नित्यं कलिदोषनिवृत्तये।
> मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः॥ ३०५॥

उपसंहरति—तस्मादिति। कलिप्रयुक्तो दोषः स्वस्वधर्मसमनुष्ठानवैकल्यं तस्य निवृत्तयेऽङ्गादिपरिपूर्तये। वैकल्यञ्च नाङ्गलोप एव अपि तु प्रधानलोपोऽपि। प्रधानविकलत्वाविशेषात्, कलिप्रयुक्तदोषत्वाविशेषाच्च। सोऽपि च प्रायेणाधुनिकानां सर्वेषां कर्मठम्मन्यानामपरिहरणीय एव। देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य मानससङ्कल्पविशेषात्मकत्वेनागनय इदं नममेत्यादिस्पष्टतरशब्दाभिलापमात्रेण तस्या जायमानत्वात्। एवं सन्ध्यावन्दनपदवाच्यं प्रधानं 'असावादित्यो ब्रह्मे'ति मन्त्रार्थानुसन्धानमादित्यावच्छिन्नचैतन्यस्य स्वात्मचैतन्येन सहाभेदभावनारूपम्। तच्च शिष्टानां रहस्याभिज्ञानामपि कादाचित्कमेव न सार्वत्रिकमिति प्रधानलोपः सर्वेषामपरिहार्यः। न च तेषामङ्गवैगुण्यनिमित्तकप्रायश्चित्तानुष्ठानेन समाधानम्। अङ्गमात्रलोप एव तेषां विधानात्। प्रधानलोपे तु पुनः करणमेवेति सिद्धान्तात्। इदं तु नामकीर्तनमुभयस्मिन्नपि निमित्ते समाधायकमिति ततोऽप्यस्योत्कर्षः सिद्धः। नन्वेवं सति प्रायश्चित्तशास्त्राणां कर्मकाण्डस्य च वैयर्थ्यमित्याशङ्क्याह—मुख्येति। मायामोहितचित्तानामल्पदेवतास्वेव महत्त्वबुद्ध्युदयेन तत्तदुपासने प्रवृत्तिः 'मायोपनेत्रपरिगृहितनेत्रकस्य लेखो महानिव विभाति यदल्पकोपि'त्यस्माभिः शिवस्तवे कथनात्। ततश्च तादृशचेतोवृत्त्यानन्त्याद्यस्यैव पुंसो यत्रैव रुचिस्तदुद्देशेनैव तानि शास्त्राणि प्रवृत्तानि। दृश्यते च लोकेऽपि कस्यचित्स्थूले गुरुभूत एवोपाये रुचिः कस्यचिल्लघुभूत एवेति। ततश्च तादृशसमस्तजनानुजिघृक्षया तानि तानि शास्त्राणि भगवत्यैव कृतानीति नानर्थक्यम्। सहस्रनामपाठे प्रणाडिकया रुच्युत्पादकत्वादपि सार्थक्यमिति तु गूढोऽभिसन्धिः। लघूपाये सत्यपि गुरूपाये जनानां प्रवृत्तिस्तु तत्तत्कर्मानुसारिव्यामोहादेवेति भावः॥ ३०५॥

सहस्रनामावलि के इन दस नामों में भी यह मातृनाम सर्वश्रेष्ठ है। अतः कलियुग के पापों से मुक्त होने के लिए इसका प्रतिदिन पाठ करना चाहिए। मूढ़ यह नहीं स्वीकार करते कि यह सर्वश्रेष्ठ स्तोत्र है।

**विष्णुनामपराः केचिच्छिवनामपराः परे।**
**न कश्चिदपि लोकेषु ललितानामतत्परः॥ ३०६॥**

श्रौतस्मार्तकर्मस्वेव रतानां बहुजन्मभिस्तादृशकर्मजन्यपुण्यपरिपाकेन विष्णुनामसु प्रीतिर्बहूनां सम्भवतीत्याशयेनाह—विष्ण्विति। तादृशविष्णुनामकीर्तनेन कतिपयैर्जन्मभिः शिवनामस्वपि कतिपयेषां प्रीतिः सम्भवतीत्याशयेनाह—शिवनामपरा इति। शिवस्य तु द्वित्रिचतुरादिभूमिकाभेदेन बहुविधत्वात्तत्र सतोऽपि परस्परतारतम्यस्य दुःखगाहत्वाद्बहुभिरपि जन्मभिः प्रयत्नत उत्तरां कक्ष्यामधिरूढा अपि मध्य एवावतिष्ठमाना भासन्ते। शिवकक्ष्येयत्तानिर्णयस्य रहस्यत्वेनाप्रसिद्धत्वात्। अतो बहुतरजन्मभिर्बहुपुण्यसम्भारैश्च लभ्यत्वाद्रहस्यतरेषु

देवीनामसु प्रीतिर्दुर्लभतरा पर्यवस्यति। अत एवोक्तं ब्रह्माण्डपुराणे--'यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम्। तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी'-ति। अत्र शङ्कराणां क्रमेणाभेदानुसन्धानरूपोपासनया चरमशङ्करतादात्म्यापन्नो यदि वा शङ्कर इत्यनेन कथ्यते। तादृशी च दशा दुर्लभतरैव। या च दुर्लभतरा सा प्रायेणाविद्यमानप्रायेवेत्याशयेनाह--न कश्चिदपीति। लोकेषु मनुष्येषु देवेषु दानवादिषु च ॥ ३०६ ॥

कुछ साधक स्वयं विष्णु के नाम को और कुछ शिव के नाम को महत्त्वपूर्ण मानते हैं। संसार में कोई भी ललिता नाम के जप में तत्पर नहीं दिखलायी देता।

**येनान्यदेवतानाम कीर्तितं जन्मकोटिषु।**
**तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ॥ ३०७ ॥**

इदानीं गूहितमभिप्रायं स्फोटयति--येनेति। अन्यासां विष्णुरुद्रेश्वरादीनां देवतानां नाम प्रातिस्विकं जन्मकोटिषु येन कीर्तितं तस्यैव कक्ष्याक्रमेणोत्तरोत्तर-देवतातादात्म्याच्चरमशिवतादात्म्यापन्नस्यैव विरलतमस्य कस्यचित्पुरुषधौरेयस्य श्रीदेवीनामकीर्तनविषयकश्रद्धाङ्कुरोदयो नान्येषामिति भावः ॥ ३०७ ॥

अन्य देवों और देवियों के नामों का करोड़ों जन्मों में पाठ करने के फल-स्वरूप ही श्रीदेवी के नामों के पाठ करने की निष्ठा और भक्ति प्राप्त होती है।

भवति श्रद्धा तस्यैव–गुरु, देव, मंत्र और स्वयं को एक ही स्वरूप मानना; यह शिक्षा केवल गुरुदेव से ग्रहण करनी चाहिए, पुस्तकों से नहीं। गुरु वह है जो शिष्य को उपदेश दे तथा पूर्णाभिषेक कर दे। उसे पादुका कहते हैं।

**चरमे जन्मनि यथा श्रीविद्योपासको भवेत्।**
**नामसाहस्रपाठश्च तथा चरमजन्मनि ॥ ३०८ ॥**

नन्वीदृशदेवीनामकीर्तनविशिष्टजन्मबाहुल्ये किं प्राप्यमित्याशङ्क्य जन्मा-न्तरमेवासम्भवित्वेन सदृष्टान्तं निरस्यति--चरम इति। अस्मिन्नंशे उपमानान्त-राभावाद्देवीनाम्नो देवीमन्त्र एवोपमानमित्याशयेन यथा श्रीविद्योपासक इत्यु-क्तम्। उपासकशब्द उपास्तिपरः। श्रीविद्येति भिन्नपदम्। गुरुदेवतामन्त्रात्मना-मैक्यभावनासिद्धिमदभिप्रायेणोपासकपदं तस्या विशेषणम्। तादृश्या एव चरमे जन्मनि लाभात् 'यस्य नो पश्चिमं जन्मे'त्यादि ब्रह्माण्डपुराणवचनात्। अथवा नामसाहस्रस्य पाठो यस्मिन्निति व्यधिकरणबहुव्रीहिणोत्तरपदमेव वा पाठक-परम्। उपासकपाठयोरुपमानोपमेयतावच्छेदकयोर्मन्त्रनाम्नोरप्युपमानोपमेयभावः फलति ॥ ३०८ ॥

जैसे सम्पूर्ण जन्म-जन्मान्तरों के अन्तिम जन्म में व्यक्ति को श्रीविद्या के प्रति भक्ति पैदा होती है, वैसे ही इस सहस्रनाम का पाठ करने की भावना उसी व्यक्ति में आती है, जिसका यह जन्म (वर्तमान) अन्तिम होता है, अथवा जिसका अब और जन्म नहीं होना है।

**यथैव विरला लोके श्रीविद्याचारवेदिनः।**
**तथैव विरलो गुह्यनामसाहस्रपाठकः॥ ३०९॥**

श्रीविद्यामन्त्रमात्रलाभो नोपास्तिः। तस्य सुलभोपायेन पुस्तकादिनापि सम्भवात्। अपि तु तद्विषयकबाह्यान्तरभेदभिन्नयावदाचारपरिज्ञानपूर्वकमनुष्ठानम्। तच्च विरलतरम्। अत एवोक्तं शक्तिरहस्ये 'कौलिके गुरवोऽनन्ता' इति। श्रौतस्मार्ताचारविषयकग्रन्थानां बहूनामुपलम्भेन तद्विषयकयावज्ज्ञानवतामपि पुरुषाणां बहूनां लाभादेकेनैव गुरुणा द्वित्रैर्वा शिष्यमनोरथपूर्तिः। एतदाचारास्तु सामस्त्येन न क्वापि ग्रन्थेषूपनिबध्यन्ते। उपनिबन्धे प्रत्युत योगिनीशापाम्नानात्। अत एवोत्तरचतुःशत्यां 'कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतल' इत्युक्तं न तु पुस्तकात्पुस्तकान्तरमिति। तस्माद्गुरुमुखेभ्य एव समस्ताचारज्ञानलाभ इति तदाशयः। एतदाशयेनैव 'मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत्। ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रये'दित्यभ्यनुज्ञा 'पूर्णाभिषेककर्ता यो गुरुस्तस्यैव पादुके'ति व्यवस्था च सङ्गच्छते। ततश्च मन्त्रमात्रस्य विरलत्वेऽपि स नात्रोपमानमपि तु यावदाचारवेदनमेवतथा विरलतमत्वादित्याशयेनोक्तमेवार्थं द्रढयति—यथैवेति। विरला विरलतमा इत्यर्थः॥ ३०९॥

बहुत कम व्यक्ति ऐसे होते हैं, जो श्रीचक्र की पूजा पद्धति के जानकार हों और ऐसे भी बहुत कम हैं जो इस गुप्त सहस्रनाम का पाठ करते हों।

**मन्त्रराजजपश्चैव चक्रराजार्चनं तथा।**
**रहस्यनामपाठश्च नाल्पस्य तपसः फलम्॥ ३१०॥**

एवं प्रत्येकं विरलानां त्रयाणामेकत्र मेलनमतीव दुर्लभमिति न्यायसिद्धमेवार्थमाह—मन्त्रेति। अपि तु निरवधिकस्येति शेषः। नकारेणैवायं समासो नाल्पस्येति न तु नञ्॥ ३१०॥

श्रीमंत्रराज का जप, श्रीचक्र की पूजा और सहस्रनाम का पाठ साधारण तपस्या के फल से नहीं होता है। ये तीनों गुण एक व्यक्ति में मिलने दुर्लभ हैं।

**अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम्।**
**स चक्षुषा विना रूपं पश्येदेव विमूढधीः॥ ३११॥**
**रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः।**
**स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति॥ ३१२॥**

एवं देवताप्रीतिकरत्वं सर्वकामपूरकत्वं चास्यान्वयमुखेनोक्त्वा व्यतिरेक-मुखेन निदर्शनालङ्काराभ्यां द्रढयति—अपठन्निति द्वाभ्याम् । स्पष्टोऽर्थः ॥ ३११-३१२ ॥

जो साधक महेश्वरी राजराजेश्वरी को बिना सहस्रनाम का पाठ किये हुए ही प्रसन्न करना चाहता है, वह ठीक ऐसे व्यक्ति के समान है, जो बिना नेत्रों के ही रूप को देखना चाहता है ।

जो सहस्रनाम को छोड़कर अन्य साधनों से सिद्धि प्राप्त करना चाहता है, वह व्यक्ति ऐसा ही है, जैसे कोई भोजन किये बिना भूख का निवारण करना चाहता हो ।

**यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ।**
**नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥ ३१३ ॥**

भक्ततावच्छेदकमप्येतदेवेत्यन्वयव्यतिरेकाभ्यामाह—य इति । यो नित्यं सङ्कीर्तयेत् स एव भक्तो नान्य इत्यर्थः । 'ये यजमानास्त ऋत्विज' इत्यत्रेव यत्त-दोर्वैपरीत्येनान्वयः ॥ ३१३ ॥

ललिता के भक्त को सदैव इस सहस्रनाम का पाठ करना चाहिए । देवी की प्रीति प्राप्त करने का इसके अतिरिक्त अन्य कोई भी साधन नहीं है । अतः भक्तिपूर्वक सहस्रनाम का पाठ माँ ललिता की प्रसन्नता के लिए करना आवश्यक है ।

**तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ।**
**इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ॥ ३१४ ॥**

नामसाहस्रपाठविधिं निगमयंस्तत्फलकथनमुपसंहरति—तस्मादिति । प्रयतः शुचिः ॥ ३१४ ॥

हे कुम्भज ! तुम्हें यह गोपनीय स्तोत्र बतलाया । तुम्हें कभी भी इसको किसी ऐसे व्यक्ति को नहीं बतलाना चाहिए जो श्रीविद्या में दीक्षित नहीं है और जो देवी का भक्त भी नहीं है ।

**नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।**
**यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥ ३१५ ॥**

उत्तरत्र सम्प्रदायप्रवर्तनप्रकारं शिक्षयति—नेति । भक्तायापि विद्यावेदन-रहिताय तत्सहितायाप्यभक्ताय न ब्रूयात् । तथा गोप्यं श्रीविद्या यथा तदभाववते न प्रदर्श्यते तथेदं तद्वतेपि न प्रदर्श्यं किमुत तदभाववत इति भावः ॥ ३१५ ॥

जिस प्रकार श्रीविद्या को गुप्त रखा जाता है, उसी प्रकार हे महामुनि ! यह सहस्रनाम भी उन व्यक्तियों से गुप्त ही रखा जाय, जो दीक्षित नहीं हैं ।

**पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ।**
**यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥ ३१६ ॥**
**तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः ।**
**रहस्यनामसाहस्रं तस्मात् संगोपयेदिदम् ॥ ३१७ ॥**

अतएव निषेधत्यर्धेन--पश्विति । पशवश्च द्विविधाः पूर्वमुक्ताः ॥ * ॥ निषेधोल्लङ्घने दण्डमाह--य इति । यश्च गृह्णातीति चकारलभ्योऽर्थः ॥३१६॥

तस्मै दात्रे विद्यारहिताय ग्रहीत्रे च । 'क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपं' इति सम्प्रदानसंज्ञा ॥ * ॥ गोपनीयतामुपसंहरत्यर्धेन--रहस्येति । रहस्येत्यादिविशेष्यं हेतुगर्भम् । तेन परिकराङ्कुरालङ्कारः । तस्मात् अनधिकारिणोर्दातृग्रहीत्रोरनर्थप्रदत्वात् रहस्यत्वाच्च गोपयेदित्यर्थः ॥ ३१७ ॥

इस सहस्रनाम की चर्चा ऐसे व्यक्तियों के बीच न की जाय जिनकी प्रकृति ( स्वभाव ) पशु-तुल्य है । जो मूर्ख श्रीविद्या से रहित पुरुष को इसका उपदेश देता है, उसके प्रति योगिनियाँ कुपित हो जाती हैं और उससे महान् अनर्थ होता है । अतः ऐसे व्यक्ति से इस सहस्रनाम स्तोत्र को छिपाना चाहिए ।

**स्वतन्त्रेण मया नोक्तं तवापि कलशोद्भव ।**
**ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥ ३१८ ॥**

ननु यद्विद्याव्रतेऽपि गोप्यं तन्मह्यं त्वया कथं प्रदर्शितमित्याशङ्कमानमगस्त्यं समाधत्ते हयग्रीवः--स्वतन्त्रेणेति । स्वतन्त्रेण पराप्रेरितेन । कलशीति जातिलक्षणो ङीष् । तत्प्रयोगश्च श्लेषेण देवीपुत्रबोधनाय । तदप्युपास्तिबलेन देवीपुत्रभावपर्यन्तां पदवीमुपारूढे वात्सल्येन ललिताम्बाप्रेरणावश्यम्भावध्वननाय । 'कलं शुके कलौ जीर्णे कलो नादेऽतिमञ्जुल' इति यादवबलात्कले शुके नादे वा शेत इति कलशी देवी । सर्वोत्तमत्वाद्वा । 'सर्वोत्तमे चोत्तमाङ्गे कुम्भे च कलशध्वनि'रिति रभसः । ललिताप्रेरणादेव तत्प्रवर्तनाया अनुल्लङ्घनीयत्वात् । अधिकारिविषय एव तत्प्रेरणस्य जायमानत्वाच्च । तेनोपासकाभासायैव न प्रदर्श्यमिति भावः ॥ ३१८ ॥

इस प्रकार इस सहस्रनाम को पूर्णतया गुप्त ही रखना चाहिए । हे कुम्भज ! इसीलिए मैंने यह उत्तम स्तोत्र तुम्हें माँ ललिता देवी की प्रेरणा से ही बतलाया था ।

कलशीसुत—कलशी–देवी और सुत–पुत्र को कहते हैं । अपनी भक्ति और निष्ठा के कारण ही अगस्त्य ऐसे स्तर पर पहुँच गये कि उन्हें देवी के पुत्र की संज्ञा मिली । ऐसा सौभाग्य केवल देवी के साधक को ही प्राप्त होता है ।

यादव-कोश के अनुसार 'कल' का अर्थ तोता ( नपुं० लिंग ) भी है। पुंलिग में इसका अर्थ है—ह्रास अथवा आकर्षक वाणी या ध्वनि। शी का अर्थ झुकना। देवी को कलशी कहते हैं, क्योंकि उनको आकर्षक वाणी द्वारा ही प्राप्त किया जा सकता है। रभसकोश के अनुसार कलश का अर्थ है—सर्वश्रेष्ठ वस्तु; और यह शिर है, अतः उन्हें कलशी कहते हैं।

**कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम्।**
**तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति॥ ३१९॥**

त्वं तु नोपासकाभासः अपि तु पूर्णोऽधिकारीति ध्वननाय प्रवर्तयति। त्वयेति शेषः। निरन्तरमभेदानुसन्धानपूर्वकम्। न चात्र नामकीर्तनविधिरसकृच्छ्रूय-माणोऽभ्यासात्कर्माणि भिन्द्यादेवेत्येकस्यैवैतावन्ति फलानीति वर्णनमयुक्तमिति वाच्यम्। भावनाभेदमात्रेणापि तदुपपत्तेः फलस्यानुपादेयत्वेन तद्विशेषोद्देशेन कर्मण एव पुनःपुनर्विधानेऽप्यन्यपरत्वेन तादृशस्य पुनःश्रवणस्याभ्यासरूपत्वाभा-वात्। 'अपः प्रणयती'ति विधेरर्थवादवैचित्र्यार्थं षड्वारं श्रवणेऽपि कर्मभेदान-ङ्गीकारात्। अनुपादेयगुणसाचिव्येऽप्यसन्निधेरभावेन प्रकरणान्तरस्यापि शङ्कि-तुमयोगाच्चेति दिक्॥ ३१९॥

हे कुम्भज! इसका सदैव भक्तिपूर्वक पाठ करना। इससे प्रसन्न होकर देवी तुम्हें मनोवांछित फल प्रदान करेंगी।

कीर्तनीयमिदं निरन्तरम्—तुम साधकों की प्रथमावस्था में नहीं हो, तुम पूर्णतया अभिषिक्त हो, अतः तुम्हें इसका सदैव कीर्तन करते रहना चाहिए।

सूत उवाच—

**इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम्।**
**आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत्॥ ३२०॥**

प्रहृष्टो वचनं प्राहेत्यादिनोपक्रान्तमेकेन श्लोकेनोपसंहरति भगवान्सूतः। आनन्दे स्वात्मानन्दे मग्नं विषयान्तरसञ्चाररराहित्येन तदेकप्रवणं हृदयं चित्तं यस्य सः। पुलका आनन्दजन्यरोमाञ्चा अस्य सञ्जाता इति पुलकितः। तारका-दित्वादितच्॥ ३२०॥

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे ललितासहस्रनाम-स्तोत्रं नाम षट्त्रिंशोऽध्यायः॥

**सूतजी ने कहा**—इस प्रकार अगस्त्य को उपदेश देकर हयग्रीव ने माँ ललिता का ध्यान किया और आनन्दित होकर तत्काल पुलकायमान हो गये।

इस प्रकार ब्रह्माण्डपुराण-उत्तरखण्ड के छत्तीसवें अध्याय में
हयग्रीव तथा अगस्त्य के संवाद के रूपमें वर्णित
यह फलश्रुति समाप्त हुई।

**अथ परिभाषायां स्वग्रन्थमुपसंहरति—**

इति परिभाषामण्डलमुदितं नरसिंहयज्वना विदुषा।
सत्सम्प्रदायगमकं शिवभक्तानन्दनाय शिवम् ॥४०॥

**मण्डलशब्दश्चत्वारिंशत्सङ्ख्यात्मकसमूहपरः। विदुषा विद्याष्टादशकविदा श्रीविद्योपासकेन च। शिवयोर्भक्तानां सत्सम्प्रदायं दुर्लभतरमन्वेषमाणानामानन्दनाय। शिवं मङ्गलरूपमिति सर्वं शिवम् ॥ ४० ॥**

अन्तिम श्लोक : इस प्रकार चालीस श्लोकों की इस संग्रह-रचना को नृसिंहयज्वा ने पूर्ण किया तथा महान् लोगों की परम्परा को स्थिर रखा और शिव तथा शिव के भक्तों को प्रसन्न किया।

शृंगेरी के जगद्गुरु शंकराचार्य के अनुसार उक्त कलाओं का विभाजन सम्भवतः सूर्य की बारह कलाओं के साथ तादात्म्य रखता है।

इति भास्कररायेण कृते सौभाग्यभास्करे।
जाता फलश्रुतिः श्लोकैः क्षमाख्या द्वादशी कला ॥ १२ ॥

यहीं पर सौभाग्यभास्कर की बारहवीं कला, जिसे क्षमा कहा
जाता है और जिसके रचयिता भास्करराय हैं,
फलश्रुति अध्याय के साथ समाप्त हुई।

---

## ग्रन्थकृत्प्रशस्तिः

श्रीविश्वामित्रवंश्यः शिवभजनपरो भारतीसोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।
मोदच्छायामितायां शरदि शरदृतावाश्विने कालयुक्ते
शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥ १ ॥
श्रुतिस्मृतिन्यायपुराणसूत्रकोशागमश्रीगुरुसम्प्रदायात् ।
निश्चित्य निर्मथ्य कृतापि टीका शोध्यैव सद्भिर्मयि हार्दवद्भिः ॥२॥
प्रमादो मेऽवश्यं भवति मतिमान्द्यादलसतः
पदार्थन्यायानामपि दुरवगाहत्वनियमात् ।
परं त्वन्तः सन्तः सदयहृदया नाममहिमा-
प्यपूर्वस्तस्मान्मे न खलु खलपापोभयभयम् ॥ ३ ॥
अम्ब त्वत्पदयोः समर्पितमिदं भाष्यं त्वया कारितं
त्वन्नामार्थविकासकं तव मुदे भूयादथ त्वां भजन् ।
यो नैनत्परिशीलयेन्न च पठेद्यः पुस्तकस्यापि वा
सङ्ग्राहं न करोति तस्य ललिते माभूद्भवत्यां मतिः ॥ ४ ॥
नायैकं मामनयन्नामसहस्राम्बुधेः परं पारम् ।
जलविन्दुर्भवजलधेर्येषां ते मे जयन्ति गुरुचरणाः ॥ ५ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र-श्रीमदगम्भीर-
रायदीक्षितसूरिसूनुना भासुरेत्युपाख्येन भास्कररायेण भासुरानन्दनाथेति-
दीक्षानामशालिना प्रणीतं सौभाग्यभास्कराख्यं ब्रह्माण्डपुराणीय-
श्रीललितारहस्यनामसहस्रभाष्यं सम्पूर्णम् ।

सम्पूर्णोऽयं ग्रन्थः ।

---

काशी में विश्वामित्र गोत्रीय गम्भीर नाम का एक व्यक्ति रहता था । वह सम्पूर्ण विद्वानों में गणमान्य माना जाता था । वह शिव का भक्त था और उसने सोमयज्ञ भी किया । उसके पुत्र ने कालयुक्ति संवत् १७८५ शुभ शरद् ऋतु में आश्विन चान्द्रमास के शुक्लपक्ष में नवमी तिथि सोमवार को ललितासहस्रनाम का यह भाष्य पूर्ण किया ॥ १ ॥

यद्यपि यह भाष्य श्रुति, स्मृति, न्याय, पुराण, सूत्र, कोश, आगम तथा गुरुओं के परम्परागत उपदेशों और शिक्षा की सहायता से रचा गया है,

किन्तु फिर भी यह आशा की जाती है कि विद्वान् पुरुष जो मेरे प्रति स्नेह रखते हैं, मेरे इस प्रयास को सहानुभूति पूर्वक पढ़ेंगे और जहाँ आवश्यक समझेगें, इसमें सुधार करेगें ॥ २ ॥

इस भाष्य में अनेक दोष हो सकते हैं, क्योंकि मेरी बुद्धि अल्प है और ज्ञान भी अपूर्ण है अथवा मेरे प्रमादवश त्रुटियाँ रह गई हों, अथवा इस कारण कि मूल पाठ का पूर्णतया समझना अत्यन्त कठिन है। अतः मैं विद्वान् लोगों और महात्माओं से याचना करता हूँ कि वे उन सभी का सुधार करने की कृपा करें ॥ ३ ॥

हे अम्बे ! यह भाष्य जिसमें आपके नामों को समझाने की चेष्टा की गयी है और जिसके लेखन की माध्यम एकमात्र आप ही रहीं, वह आपके ही चरण-कमलों में समर्पित है। अतः मुझे विश्वास है कि इसे स्वीकारा जायेगा और आपको इससे प्रसन्नता प्राप्त होगी। जो इसका अध्ययन नहीं करता और पढ़ता भी नहीं है और न इससे प्रीति ही रखता है; हे ललिते ! यथार्थ में उसमें आस्था नहीं है ॥ ४ ॥

मेरे गुरुदेव की जय हो, जिनके एक नाम से मैं सहस्रनाम का सागर पार करने में ठीक वैसे ही समर्थ हो गया, जिस प्रकार गुरुचरणों के जल की एक बूंद अपार जलधि को पार करा देती है ॥ ५ ॥

---

# ललितासहस्रनामावली

ॐ श्रीमात्रे नमः ।
ॐ श्रीमहाराज्ञ्यै नमः ।
ॐ श्रीमत्सिंहासनेश्वर्यै नमः ।
ॐ चिदग्निकुण्डसम्भूतायै नमः ।
ॐ देवकार्यसमुद्यतायै नमः ।
ॐ उद्यद्भानुसहस्राभायै नमः ।
ॐ चतुर्बाहुसमन्वितायै नमः ।
ॐ रागस्वरूपपाशाढ्यायै नमः ।
ॐ क्रोधाकाराङ्कुशोज्ज्वलायै नमः ।
ॐ मनोरूपेक्षुकोदण्डायै नमः ॥ १० ॥
ॐ पञ्चतन्मात्रसायकायै नमः ।
ॐ निजारुणप्रभापूरमज्जद्ब्रह्माण्ड-
मण्डलायै नमः ।
ॐ चम्पकाशोकपुन्नागसौगन्धिक-
लसत्कचायै नमः ।
ॐ कुरुविन्दमणिश्रेणीकनत्कोटीर-
मण्डितायै नमः ।
ॐ अष्टमीचन्द्रविभ्राजदलिकस्थल-
शोभितायै नमः ।
ॐ मुखचन्द्रकलङ्काभमृगनाभि-
विशेषकायै नमः ।
ॐ वदनस्मरमाङ्गल्यगृहतोरण-
चिल्लिकायै नमः ।
ॐ वक्त्रलक्ष्मीपरीवाहचलन्मीनाभ-
लोचनायै नमः ।
ॐ नवचम्पकपुष्पाभनासादण्ड-
विराजितायै नमः ।
ॐ ताराकान्तितिरस्कारिनासा-
भरणभासुरायै नमः ॥ २० ॥
ॐ कदम्बमञ्जरीक्लृप्तकर्णपूर-
मनोहरायै नमः ।
ॐ ताटङ्कयुगलीभूततपनोडुप-
मण्डलायै नमः ।
ॐ पद्मरागशिलादर्शपरिभावि-
कपोलभुवे नमः ।
ॐ नवविद्रुमविम्वश्रीन्यक्कारि-
दशनच्छदायै नमः ।
ॐ शुद्धविद्याङ्कुराकारद्विजपङ्क्ति-
द्वयोज्ज्वलायै नमः ।
ॐ कर्पूरवीटिकामोदसमाकर्षिदि-
गन्तरायै नमः ।
ॐ निजसंल्लापमाधुर्यविनिर्भर्सित-
कच्छप्यै नमः ।
ॐ मन्दस्मितप्रभापूरमज्जत्कामेश
मानसायै नमः ।
ॐ अनाकलितसादृश्यचिवुक-
श्रीविराजितायै नमः ।
ॐ कामेशवद्धमाङ्गल्यसूत्रशोभित-
कन्धरायै नमः । ॥ ३० ॥
ॐ कनकाङ्गदकेयूरकमनीय-
भुजान्वितायै नमः ।
ॐ रत्नग्रैवेयचिन्ताकलोलमुक्ता-
फलान्वितायै नमः ।
ॐ कामेश्वरप्रेमरत्नमणिप्रति-
पणस्तन्यै नमः ।
ॐ नाभ्यालवालरोमालिलताफल-
कुचद्वय्यै नमः ।
ॐ लक्ष्यरोमलताधारतासमुन्नेय-
मध्यमायै नमः ।
ॐ स्तनभारदलन्मध्यपट्टवन्ध-
वलित्रयायै नमः ।
ॐ अरुणारुणकौसुम्भवस्त्र-
भास्वत्कटीतट्यै नमः ।
ॐ रत्नकिङ्किणिकारम्यरशनादाम-
भूषितायै नमः ।

ॐ कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै नमः ।
ॐ माणिक्यमुकुटाकारजानुद्वयविराजितायै नमः । ॥ ४० ॥
ॐ इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै नमः ।
ॐ गूढगुल्फायै नमः ।
ॐ कूर्मपृष्ठजयिष्णुप्रपदान्वितायै नमः ।
ॐ नखदीधितिसञ्छन्ननमज्जनतमोगुणायै नमः ।
ॐ पदद्वयप्रभाजालपराकृतसरोरुहायै नमः ।
ॐ सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै नमः ।
ॐ मरालीमन्दगमनायै नमः ।
ॐ महालावण्यशेवधये नमः ।
ॐ सर्वारुणायै नमः ।
ॐ अनवद्याङ्ग्यै नमः । ॥ ५० ॥
ॐ सर्वाभरणभूषितायै नमः ।
ॐ शिवकामेश्वराङ्कस्थायै नमः ।
ॐ शिवायै नमः ।
ॐ स्वाधीनवल्लभायै नमः ।
ॐ सुमेरुशृङ्गमध्यस्थायै नमः ।
ॐ श्रीमन्नगरनायिकायै नमः ।
ॐ चिन्तामणिगृहान्तःस्थायै नमः ।
ॐ पञ्चब्रह्मासनस्थितायै नमः ।
ॐ महापद्माटवीसंस्थायै नमः ।
ॐ कदम्बवनवासिन्यै नमः ॥ ६० ॥
ॐ सुधासागरमध्यस्थायै नमः ।
ॐ कामाक्ष्यै नमः ।
ॐ कामदायिन्यै नमः ।
ॐ देवर्षिगणसङ्घातस्तूयमानात्मवैभवायै नमः ।
ॐ भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै नमः ।
ॐ सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै नमः ।
ॐ अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै नमः ।
ॐ चक्रराजरथारूढसर्वायुधपरिष्कृतायै नमः ।
ॐ गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै नमः ।
ॐ किरिचक्ररथारूढदण्डनाथपुरस्कृतायै नमः ॥ ७० ॥
ॐ ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै नमः ।
ॐ भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै नमः ।
ॐ नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै नमः ।
ॐ भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै नमः ।
ॐ मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै नमः ।
ॐ विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै नमः ।
ॐ कामेश्वरामुखालोककल्पितश्रीगणेश्वरायै नमः ।
ॐ महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै नमः ।
ॐ भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै नमः ।
ॐ कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै नमः ॥ ८० ॥
ॐ महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै नमः ।
ॐ कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै नमः ।
ॐ ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै नमः ।

ॐ हरनेत्राग्निसन्दग्धकामसञ्जीवनौ-
षध्यै नमः ।
ॐ श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै
नमः ।
ॐ कण्ठाधःकटिपर्यन्तमध्यकूट-
स्वरूपिण्यै नमः ।
ॐ शक्तिकूटैकतापन्नकट्यधोभाग-
धारिण्यै नमः ।
ॐ मूलमन्त्रात्मिकायै नमः ।
ॐ मूलकूटत्रयकलेवरायै नमः ।
ॐ कुलामृतैकरसिकायै नमः ॥ ९० ॥
ॐ कुलसङ्केतपालिन्यै नमः ।
ॐ कुलाङ्गनायै नमः ।
ॐ कुलान्तस्थायै नमः ।
ॐ कौलिन्यै नमः ।
ॐ कुलयोगिन्यै नमः ।
ॐ अकुलायै नमः ।
ॐ समयान्तस्थायै नमः ।
ॐ समयाचारतत्परायै नमः ।
ॐ मूलाधारैकनिलयायै नमः ।
ॐ ब्रह्मग्रन्थिविभेदिन्यै नमः ॥ १०० ॥
ॐ मणिपूरान्तरुदितायै नमः ।
ॐ विष्णुग्रन्थिविभेदिन्यै नमः ।
ॐ आज्ञाचक्रान्तरालस्थायै नमः ।
ॐ रुद्रग्रन्थिविभेदिन्यै नमः ।
ॐ सहस्राराम्बुजारूढायै नमः ।
ॐ सुधासाराभिवर्षिण्यै नमः ।
ॐ तडिल्लतासमरुच्यै नमः ।
ॐ षट्चक्रोपरिसंस्थितायै नमः ।
ॐ महासक्त्यै नमः ।
ॐ कुण्डलिन्यै नमः । ॥ ११० ॥
ॐ बिसतन्तुतनीयस्यै नमः ।
ॐ भवान्यै नमः ।
ॐ भावनागम्यायै नमः ।
ॐ भवारण्यकुठारिकायै नमः ।
ॐ भद्रप्रियायै नमः ।
ॐ भद्रमूर्तये नमः ।
ॐ भक्तसौभाग्यदायिन्यै नमः ।
ॐ भक्तिप्रियायै नमः ।
ॐ भक्तिगम्यायै नमः ।
ॐ भक्तिवश्यायै नमः । ॥ १२० ॥
ॐ भयापहायै नमः ।
ॐ शाम्भव्यै नमः ।
ॐ शारदाराध्यायै नमः ।
ॐ शर्वाण्यै नमः ।
ॐ शर्मदायिन्यै नमः ।
ॐ शाङ्कर्यै नमः ।
ॐ श्रीकर्यै नमः ।
ॐ साध्व्यै नमः ।
ॐ शरच्चन्द्रनिभाननायै नमः ।
ॐ शातोदर्यै नमः । ॥ १३० ॥
ॐ शान्तिमत्यै नमः ।
ॐ निराधारायै नमः ।
ॐ निरञ्जनायै नमः ।
ॐ निर्लेपायै नमः ।
ॐ निर्मलायै नमः ।
ॐ नित्यायै नमः ।
ॐ निराकारायै नमः ।
ॐ निराकुलायै नमः ।
ॐ निर्गुणायै नमः ।
ॐ निष्कलायै नमः । ॥ १४० ॥
ॐ शान्तायै नमः ।
ॐ निष्कामायै नमः ।
ॐ निरुपप्लवायै नमः ।
ॐ नित्यमुक्तायै नमः ।
ॐ निर्विकारायै नमः ।
ॐ निष्प्रपञ्चायै नमः ।
ॐ निराश्रयायै नमः ।
ॐ नित्यशुद्धायै नमः ।
ॐ नित्यबुद्धायै नमः ।

ॐ निरवद्यायै नमः । ॥ १५० ॥
ॐ निरन्तरायै नमः ।
ॐ निष्कारणायै नमः ।
ॐ निष्कलङ्कायै नमः ।
ॐ निरुपाधये नमः ।
ॐ निरीश्वरायै नमः ।
ॐ नीरागायै नमः ।
ॐ रागमथन्यै नमः ।
ॐ निर्मदायै नमः ।
ॐ मदनाशिन्यै नमः ।
ॐ निश्चिन्तायै नमः । ॥ १६० ॥
ॐ निरहङ्कारायै नमः ।
ॐ निर्मोहायै नमः ।
ॐ मोहनाशिन्यै नमः ।
ॐ निर्ममायै नमः ।
ॐ ममताहन्त्र्यै नमः ।
ॐ निष्पापायै नमः ।
ॐ पापनाशिन्यै नमः ।
ॐ निष्क्रोधायै नमः ।
ॐ क्रोधशमन्यै नमः ।
ॐ निर्लोभायै नमः । ॥ १७० ॥
ॐ लोभनाशिन्यै नमः ।
ॐ निःसंशयायै नमः ।
ॐ संशयघ्न्यै नमः ।
ॐ निर्भवायै नमः ।
ॐ भवनाशिन्यै नमः ।
ॐ निर्विकल्पायै नमः ।
ॐ निराबाधायै नमः ।
ॐ निर्भेदायै नमः ।
ॐ भेदनाशिन्यै नमः ।
ॐ निर्नाशायै नमः । ॥ १८० ॥
ॐ मृत्युमथन्यै नमः ।
ॐ निष्क्रियायै नमः ।
ॐ निष्परिग्रहायै नमः ।
ॐ निस्तुलायै नमः ।
ॐ नीलचिकुरायै नमः ।
ॐ निरपायायै नमः ।
ॐ निरत्ययायै नमः ।
ॐ दुर्लभायै नमः ।
ॐ दुर्गमायै नमः ।
ॐ दुर्गायै नमः । ॥ १९०
ॐ दुःखहन्त्र्यै नमः ।
ॐ सुखप्रदायै नमः ।
ॐ दुष्टदूरायै नमः ।
ॐ दुराचारशमन्यै नमः ।
ॐ दोषवर्जितायै नमः ।
ॐ सर्वज्ञायै नमः ।
ॐ सान्द्रकरुणायै नमः ।
ॐ समानाधिकवर्जितायै नमः ।
ॐ सर्वशक्तिमय्यै नमः ।
ॐ सर्वमङ्गलायै नमः । ॥ २००
ॐ सद्गतिप्रदायै नमः ।
ॐ सर्वेश्वर्यै नमः ।
ॐ सर्वमय्यै नमः ।
ॐ सर्वमन्त्रस्वरूपिण्यै नमः ।
ॐ सर्वयन्त्रात्मिकायै नमः ।
ॐ सर्वतन्त्ररूपायै नमः ।
ॐ मनोन्मन्यै नमः ।
ॐ माहेश्वर्यै नमः ।
ॐ महादेव्यै नमः ।
ॐ महालक्ष्म्यै नमः । ॥ २१०
ॐ मृडप्रियायै नमः ।
ॐ महारूपायै नमः ।
ॐ महापूज्यायै नमः ।
ॐ महापातकनाशिन्यै नमः ।
ॐ महामायायै नमः ।
ॐ महासत्त्वायै नमः ।
ॐ महाशक्त्यै नमः ।
ॐ महारत्यै नमः ।
ॐ महाभोगायै नमः ।

ॐ महैश्वर्यायै नमः । ॥ २२० ॥
ॐ महावीर्यायै नमः ।
ॐ महाबलायै नमः ।
ॐ महाबुद्ध्यै नमः ।
ॐ महासिद्ध्यै नमः ।
ॐ महायोगीश्वरेश्वर्यै नमः ।
ॐ महातन्त्रायै नमः ।
ॐ महामन्त्रायै नमः ।
ॐ महायन्त्रायै नमः ।
ॐ महासनायै नमः ।
ॐ महायागक्रमाराध्यायै नमः॥२३०॥
ॐ महाभैरवपूजितायै नमः ।
ॐ महेश्वरमहाकल्पमहाताण्डवसाक्षिण्यै नमः ।
ॐ महाकामेशमहिष्यै नमः ।
ॐ महात्रिपुरसुन्दर्यै नमः ।
ॐ चतुःषष्ट्युपचाराढ्यायै नमः ।
ॐ चतुःषष्टिकलामय्यै नमः ।
ॐ महाचतुःषष्टिकोटियोगिनीगणसेवितायै नमः ।
ॐ मनुविद्यायै नमः ।
ॐ चन्द्रविद्यायै नमः ।
ॐ चन्द्रमण्डलमध्यगायै नमः ॥२४०॥
ॐ चारुरूपायै नमः ।
ॐ चारुहासायै नमः ।
ॐ चारुचन्द्रकलाधरायै नमः ।
ॐ चराचरजगन्नाथायै नमः ।
ॐ चक्रराजनिकेतनायै नमः ।
ॐ पार्वत्यै नमः ।
ॐ पद्मनयनायै नमः ।
ॐ पद्मरागसमप्रभायै नमः ।
ॐ पञ्चप्रेतासनासीनायै नमः ।
ॐ पञ्चब्रह्मस्वरूपिण्यै नमः ॥ २५० ॥
ॐ चिन्मय्यै नमः ।
ॐ परमानन्दायै नमः ।
ॐ विज्ञानघनरूपिण्यै नमः ।
ॐ ध्यानध्यातृध्येयरूपायै न ।
ॐ धर्माधर्मविवर्जितायै नमः ।
ॐ विश्वरूपायै नमः ।
ॐ जागरिण्यै नमः ।
ॐ स्वपन्त्यै नमः ।
ॐ तैजसात्मिकायै नमः ।
ॐ सुप्तायै नमः ॥ २६० ॥
ॐ प्राज्ञात्मिकायै नमः ।
ॐ तुर्यायै नमः ।
ॐ सर्वावस्थाविवर्जितायै नमः ।
ॐ सृष्टिकर्त्र्यै नमः ।
ॐ ब्रह्मरूपायै नमः ।
ॐ गोप्त्र्यै नमः ।
ॐ गोविन्दरूपिण्यै नमः ।
ॐ संहारिण्यै नमः ।
ॐ रुद्ररूपायै नमः ।
ॐ तिरोधानकर्य्यै नमः ॥ २७० ॥
ॐ ईश्वर्यै नमः ।
ॐ सदाशिवायै नमः ।
ॐ अनुग्रहदायै नमः ।
ॐ पञ्चकृत्यपरायणायै नमः ।
ॐ भानुमण्डलमध्यस्थायै नमः ।
ॐ भैरव्यै नमः ।
ॐ भगमालिन्यै नमः ।
ॐ पद्मासनायै नमः ।
ॐ भगवत्यै नमः ।
ॐ पद्मनाभसहोदर्यै नमः ॥ २८० ॥
ॐ उन्मेषनिमिषोत्पन्नविपन्नभुवनावल्यै नमः ।
ॐ सहस्रशीर्षवदनायै नमः ।
ॐ सहस्राक्ष्यै नमः ।
ॐ सहस्रपादे नमः ।
ॐ आब्रह्मकीटजनन्यै नमः ।
ॐ वर्णाश्रमविधायिन्यै नमः ।

ॐ निजाज्ञारूपनिगमायै नमः ।
ॐ पुण्यापुण्यफलप्रदायै नमः ।
ॐ श्रुतिसीमन्तदूरीकृतपादाब्ज-
ॐ धूलिकायै नमः ।
ॐ सकलागमसन्दोहशुक्तिसम्पुटमौक्ति-
ॐ कायै नमः । ॥ २९० ॥
ॐ पुरुषार्थप्रदायै नमः ।
ॐ पूर्णायै नमः ।
ॐ भोगिन्यै नमः ।
ॐ भुवनेश्वर्यै नमः ।
ॐ अम्बिकायै नमः ।
ॐ अनादिनिधनायै नमः ।
ॐ हरिब्रह्मेन्द्रसेवितायै नमः ।
ॐ नारायण्यै नमः ।
ॐ नादरूपायै नमः ।
ॐ नामरूपविवर्जितायै नमः ॥३००॥
ॐ ह्रींकार्यै नमः ।
ॐ ह्रीमत्यै नमः ।
ॐ हृद्यायै नमः ।
ॐ हेयोपादेयवर्जितायै नमः ।
ॐ राजराजार्चितायै नमः ।
ॐ राज्ञ्यै नमः ।
ॐ रम्यायै नमः ।
ॐ राजीवलोचनायै नमः ।
ॐ रञ्जन्यै नमः ।
ॐ रमण्यै नमः । ॥ ३१० ॥
ॐ रस्यायै नमः ।
ॐ रणत्किङ्किणिमेखलायै नमः ।
ॐ रमायै नमः ।
ॐ राकेन्दुवदनायै नमः ।
ॐ रतिरूपायै नमः ।
ॐ रतिप्रियायै नमः ।
ॐ रक्षाकर्त्र्यै नमः ।
ॐ राक्षसघ्न्यै नमः ।
ॐ रामायै नमः ।

ॐ रमणलम्पटायै नमः । ॥ ३२० ॥
ॐ काम्यायै नमः ।
ॐ कामकलारूपायै नमः ।
ॐ कदम्बकुसुमप्रियायै नमः ।
ॐ कल्याण्यै नमः ।
ॐ जगतीकन्दायै नमः ।
ॐ करुणारससागरायै नमः ।
ॐ कलावत्यै नमः ।
ॐ कलालापायै नमः ।
ॐ कान्तायै नमः ।
ॐ कादम्बरीप्रियायै नमः ॥ ३३० ॥
ॐ वरदायै नमः ।
ॐ वामनयनायै नमः ।
ॐ वारुणीमदविह्वलायै नमः ।
ॐ विश्वाधिकायै नमः ।
ॐ वेदवेद्यायै नमः ।
ॐ विन्ध्याचलनिवासिन्यै नमः ।
ॐ विधात्र्यै नमः ।
ॐ वेदजनन्यै नमः ।
ॐ विष्णुमायायै नमः ।
ॐ विलासिन्यै नमः । ॥ ३४० ॥
ॐ क्षेत्रस्वरूपायै नमः ।
ॐ क्षेत्रेश्यै नमः ।
ॐ क्षेत्रक्षेत्रज्ञपालिन्यै नमः ।
ॐ क्षयवृद्धिविनिर्मुक्तायै नमः ।
ॐ क्षेत्रपालसमर्चितायै नमः ।
ॐ विजयायै नमः ।
ॐ विमलायै नमः ।
ॐ वन्द्यायै नमः ।
ॐ वन्दारुजनवत्सलायै नमः ।
ॐ वाग्वादिन्यै नमः । ॥ ३५० ॥
ॐ वामकेश्यै नमः ।
ॐ वह्निमण्डलवासिन्यै नमः ।
ॐ भक्तिमत्कल्पलतिकायै नमः ।
ॐ पशुपाशविमोचिन्यै नमः ।

ॐ संहृताशेषपाषण्डायै नमः ।
ॐ सदाचारप्रवर्तिकायै नमः ।
ॐ तापत्रयाग्निसन्तप्तसमाह्लादन-
चन्द्रिकायै नमः ।
ॐ तरुण्यै नमः ।
ॐ तापसाराध्यै नमः ।
ॐ तनुमध्यायै नमः । ॥ ३६० ॥
ॐ तमोपहायै नमः ।
ॐ चित्यै नमः ।
ॐ तत्पदलक्ष्यार्थायै नमः ।
ॐ चिदेकरसरूपिण्यै नमः ।
ॐ स्वात्मानन्दलवीभूतब्रह्मा-
द्यानन्दसन्तत्यै नमः ।
ॐ परायै नमः ।
ॐ प्रत्यक्चितीरूपायै नमः ।
ॐ पश्यन्त्यै नमः ।
ॐ परदेवतायै नमः ।
ॐ मध्यमायै नमः । ॥ ३७० ॥
ॐ वैखरीरूपायै नमः ।
ॐ भक्तमानसहंसिकायै नमः ।
ॐ कामेश्वरप्राणनाड्यै नमः ।
ॐ कृतज्ञायै नमः ।
ॐ कामपूजितायै नमः ।
ॐ शृङ्गाररससम्पूर्णायै नमः ।
ॐ जयायै नमः ।
ॐ जालन्धरस्थितायै नमः ।
ॐ ओड्याणपीठनिलयायै नमः ।
ॐ बिन्दुमण्डलवासिन्यै नमः ॥३८०॥
ॐ रहोयागक्रमाराध्यायै नमः ।
ॐ रहस्तर्पणतर्पितायै नमः ।
ॐ सद्यःप्रसादिन्यै नमः ।
ॐ विश्वसाक्षिण्यै नमः ।
ॐ साक्षिवर्जितायै नमः ।
ॐ षडङ्गदेवतायुक्तायै नमः ।
ॐ षाड्गुण्यपरिपूरितायै नमः ।
ॐ नित्यक्लिन्नायै नमः ।
ॐ निरुपमायै नमः ।
ॐ निर्वाणसुखदायिन्यै नमः ॥३९०॥
ॐ नित्याषोडशिकारूपायै नमः ।
ॐ श्रीकण्ठार्धशरीरिण्यै नमः ।
ॐ प्रभावत्यै नमः ।
ॐ प्रभारूपायै नमः ।
ॐ प्रसिद्धायै नमः ।
ॐ परमेश्वर्यै नमः ।
ॐ मूलप्रकृत्यै नमः ।
ॐ अव्यक्तायै नमः ।
ॐ व्यक्ताव्यक्तस्वरूपिण्यै नमः ।
ॐ व्यापिन्यै नमः । ॥ ४०० ॥
ॐ विविधाकारायै नमः ।
ॐ विद्याविद्यास्वरूपिण्यै नमः ।
ॐ महाकामेशनयनकुमुदाह्लाद-
कौमुद्यै नमः ।
ॐ भक्तहार्दतमोभेदभानुमद्भानु-
सन्तत्यै नमः ।
ॐ शिवदूत्यै नमः ।
ॐ शिवाराध्यायै नमः ।
ॐ शिवमूर्त्यै नमः ।
ॐ शिवङ्कर्यै नमः ।
ॐ शिवप्रियायै नमः ।
ॐ शिवपरायै नमः । ॥ ४१० ॥
ॐ शिष्टेष्टायै नमः ।
ॐ शिष्टपूजितायै नमः ।
ॐ अप्रमेयायै नमः ।
ॐ स्वप्रकाशायै नमः ।
ॐ मनोवाचामगोचरायै नमः ।
ॐ चिच्छक्त्यै नमः ।
ॐ चेतनारूपायै नमः ।
ॐ जडशक्त्यै नमः ।
ॐ जडात्मिकायै नमः ।
ॐ गायत्र्यै नमः । ॥ ४२० ॥

ॐ व्याहृत्यै नमः ।
ॐ सन्ध्यायै नमः ।
ॐ द्विजवृन्दनिषेवितायै नमः ।
ॐ तत्त्वासनायै नमः ।
ॐ तस्यै नमः ।
ॐ तुभ्यं नमः ।
ॐ अय्यै नमः ।
ॐ पञ्चकोशान्तरस्थितायै नमः ।
ॐ निःसीममहिम्ने नमः ।
ॐ नित्ययौवनायै नमः । ॥ ४३० ॥
ॐ मदशालिन्यै नमः ।
ॐ मदाघूर्णितरक्ताक्ष्यै नमः ।
ॐ मदपाटलगण्डभुवे नमः ।
ॐ चन्दनद्रवदिग्धाङ्ग्यै नमः ।
ॐ चाम्पेयकुसुमप्रियायै नमः ।
ॐ कुशलायै नमः ।
ॐ कोमलाकारायै नमः ।
ॐ कुरुकुल्लायै नमः ।
ॐ कुलेश्वर्यै नमः ।
ॐ कुलकुण्डालयायै नमः ॥ ४४० ॥
ॐ कौलमार्गतत्परसेवितायै नमः ।
ॐ कुमारगणनाथाम्बायै नमः ।
ॐ तुष्टयै नमः ।
ॐ पुष्टयै नमः ।
ॐ मत्यै नमः ।
ॐ धृत्यै नमः ।
ॐ शान्त्यै नमः ।
ॐ स्वस्तिमत्यै नमः ।
ॐ कान्त्यै नमः ।
ॐ नन्दिन्यै नमः । ॥ ४५० ॥
ॐ विघ्ननाशिन्यै नमः ।
ॐ तेजोवत्यै नमः ।
ॐ त्रिनयनायै नमः ।
ॐ लोलाक्षी कामरूपिण्यै नमः ।
ॐ मालिन्यै नमः ।
ॐ हंसिन्यै नमः ।
ॐ मात्रे नमः ।
ॐ मलयाचलवासिन्यै नमः ।
ॐ सुमुख्यै नमः ।
ॐ नलिन्यै नमः । ॥ ४६० ॥
ॐ सुभ्रुवे नमः ।
ॐ शोभनायै नमः ।
ॐ सुरनायिकायै नमः ।
ॐ कालकण्ठ्यै नमः ।
ॐ कान्तिमत्यै नमः ।
ॐ क्षोभिण्यै नमः ।
ॐ सूक्ष्मरूपिण्यै नमः ।
ॐ वज्रेश्वर्यै नमः ।
ॐ वामदेव्यै नमः ।
ॐ वयोऽवस्थाविवर्जितायै नमः । ॥ ४७० ॥
ॐ सिद्धेश्वर्यै नमः ।
ॐ सिद्धविद्यायै नमः ।
ॐ सिद्धमात्रे नमः ।
ॐ यशस्विन्यै नमः ।
ॐ विशुद्धिचक्रनिलयायै नमः ।
ॐ आरक्तवर्णायै नमः ।
ॐ त्रिलोचनायै नमः ।
ॐ खट्वाङ्गादिप्रहरणायै नमः ।
ॐ वदनैकसमन्वितायै नमः ।
ॐ पायसान्नप्रियायै नमः ॥ ४८० ॥
ॐ त्वक्स्थायै नमः ।
ॐ पशुलोकभयङ्कर्यै नमः ।
ॐ अमृतादिमहाशक्तिसंवृतायै नमः ।
ॐ डाकिनीश्वर्यै नमः ।
ॐ अनाहताब्जनिलयायै नमः ।
ॐ श्यामाभायै नमः ।
ॐ वदनद्वयायै नमः ।
ॐ दंष्ट्रोज्ज्वलायै नमः ।
ॐ अक्षमालादिधरायै नमः ।

ॐ रुधिरसंस्थितायै नमः ॥ ४९० ॥
ॐ कालरात्र्यादिशक्त्यौघवृतायै नमः ।
ॐ स्निग्धौदनप्रियायै नमः ।
ॐ महावीरेन्द्रवरदायै नमः ।
ॐ राकिण्यम्बास्वरूपिण्यै नमः ।
ॐ मणिपूराब्जनिलयायै नमः ।
ॐ वदनत्रयसंयुतायै नमः ।
ॐ वज्रादिकायुधोपेतायै नमः ।
ॐ डामर्यादिभिरावृतायै नमः ।
ॐ रक्तवर्णायै नमः ।
ॐ मांसनिष्ठायै नमः । ॥ ५०० ॥
ॐ गुडान्नप्रीतमानसायै नमः ।
ॐ समस्तभक्तसुखदायै नमः ।
ॐ लाकिन्यम्बास्वरूपिण्यै नमः ।
ॐ स्वाधिष्ठानाम्बुजगतायै नमः ।
ॐ चतुर्वक्त्रमनोहरायै नमः ।
ॐ शूलाद्यायुधसम्पन्नायै नमः ।
ॐ पीतवर्णायै नमः ।
ॐ अतिगर्वितायै नमः ।
ॐ मेदोनिष्ठायै नमः ।
ॐ मधुप्रीतायै नमः । ॥ ५१० ॥
ॐ बन्धिन्यादिसमन्वितायै नमः ।
ॐ दध्यन्नासक्तहृदयायै नमः ।
ॐ काकिनीरूपधारिण्यै नमः ।
ॐ मूलाधाराम्बुजारूढायै नमः ।
ॐ पञ्चवक्त्रायै नमः ।
ॐ अस्थिसंस्थितायै नमः ।
ॐ अङ्कुशादिप्रहरणायै नमः ।
ॐ वरदादिनिषेवितायै नमः ।
ॐ मुद्गौदनासक्तचित्तायै नमः ।
ॐ साकिन्यम्बास्वरूपिण्यै नमः ॥ ५२० ॥
ॐ आज्ञाचक्राब्जनिलयायै नमः ।
ॐ शुक्लवर्णायै नमः ।
ॐ षडाननायै नमः ।
ॐ मज्जासंस्थायै नमः ।
ॐ हंसवती मुख्यशक्तिसमन्वितायै नमः ।
ॐ हरिद्रान्नैकरसिकायै नमः ।
ॐ हाकिनीरूपधारिण्यै नमः ।
ॐ सहस्रदलपद्मस्थायै नमः ।
ॐ सर्ववर्णोपशोभितायै नमः ।
ॐ सर्वायुधधरायै नमः । ॥ ५३० ॥
ॐ शुक्लसंस्थितायै नमः ।
ॐ सर्वतोमुख्यै नमः ।
ॐ सर्वौदनप्रीतचित्तायै नमः ।
ॐ याकिन्यम्बास्वरूपिण्यै नमः ।
ॐ स्वाहायै नमः ।
ॐ स्वधायै नमः ।
ॐ अमत्यै नमः ।
ॐ मेधायै नमः ।
ॐ श्रुत्यै नमः ।
ॐ स्मृत्यै नमः । ॥ ५४० ॥
ॐ अनुत्तमायै नमः ।
ॐ पुण्यकीर्त्यै नमः ।
ॐ पुण्यलभ्यायै नमः ।
ॐ पुण्यश्रवणकीर्तनायै नमः ।
ॐ पुलोमजार्चितायै नमः ।
ॐ बन्धमोचन्यै नमः ।
ॐ बन्धुरालकायै नमः ।
ॐ विमर्शरूपिण्यै नमः ।
ॐ विद्यायै नमः ।
ॐ वियदादिजगत्प्रसवे नमः ॥ ५५० ॥
ॐ सर्वव्याधिप्रशमन्यै नमः ।
ॐ सर्वमृत्युनिवारिण्यै नमः ।
ॐ अग्रगण्यायै नमः ।
ॐ अचिन्त्यरूपायै नमः ।
ॐ कलिकल्मषनाशिन्यै नमः ।
ॐ कात्यायन्यै नमः ।
ॐ कालहन्त्र्यै नमः ।

ॐ कमलाक्षनिषेवितायै नमः ।
ॐ ताम्बूलपूरितमुख्यै नमः ।
ॐ दाडिमीकुसुमप्रभायै नमः ॥५६०॥
ॐ मृगाक्ष्यै नमः ।
ॐ मोहिन्यै नमः ।
ॐ मुख्यायै नमः ।
ॐ मृडान्यै नमः ।
ॐ मित्ररूपिण्यै नमः ।
ॐ नित्यतृप्तायै नमः ।
ॐ भक्तनिधये नमः ।
ॐ नियन्त्र्यै नमः ।
ॐ निखिलेश्वर्यै नमः ।
ॐ मैत्र्यादिवासनालभ्यायै नमः । ॥ ५७० ॥
ॐ महाप्रलयसाक्षिण्यै नमः ।
ॐ पराशक्त्यै नमः ।
ॐ परानिष्ठायै नमः ।
ॐ प्रज्ञानघनरूपिण्यै नमः ।
ॐ माध्वीपानालसायै नमः ।
ॐ मत्तायै नमः ।
ॐ मातृकावर्णरूपिण्यै नमः ।
ॐ महाकैलासनिलयायै नमः ।
ॐ मृणालमृदुदोर्लतायै नमः ।
ॐ महनीयायै नमः । ॥ ५८० ॥
ॐ दयामूर्त्यै नमः ।
ॐ महासाम्राज्यशालिन्यै नमः ।
ॐ आत्मविद्यायै नमः ।
ॐ महाविद्यायै नमः ।
ॐ श्रीविद्यायै नमः ।
ॐ कामसेवितायै नमः ।
ॐ श्रीषोडशाक्षरीविद्यायै नमः ।
ॐ त्रिकूटायै नमः ।
ॐ कामकोटिकायै नमः ।
ॐ कटाक्षकिङ्करीभूतकमलाकोटिसेवितायै नमः । ॥ ५९० ॥
ॐ शिरःस्थितायै नमः ।
ॐ चन्द्रनिभायै नमः ।
ॐ भालस्थायै नमः ।
ॐ इन्द्रधनुष्प्रभायै नमः ।
ॐ हृदयस्थायै नमः ।
ॐ रविप्रख्यायै नमः ।
ॐ त्रिकोणान्तरदीपिकायै नमः ।
ॐ दाक्षायण्यै नमः ।
ॐ दैत्यहन्त्र्यै नमः ।
ॐ दक्षयज्ञविनाशिन्यै नमः ॥ ६०० ॥
ॐ दरान्दोलितदीर्घाक्ष्यै नमः ।
ॐ दरहासोज्ज्वलन्मुख्यै नमः ।
ॐ गुरुमूर्त्यै नमः ।
ॐ गुणनिधये नमः ।
ॐ गोमात्रे नमः ।
ॐ गुहजन्मभुवे नमः ।
ॐ देवेश्यै नमः ।
ॐ दण्डनीतिस्थायै नमः ।
ॐ दहराकाशरूपिण्यै नमः ।
ॐ प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजितायै नमः ॥ ६१० ॥
ॐ कलात्मिकायै नमः ।
ॐ कलानाथायै नमः ।
ॐ काव्यालापविनोदिन्यै नमः ।
ॐ सचामररमावाणीसव्यदक्षिणसेवितायै नमः ।
ॐ आदिशक्त्यै नमः ।
ॐ अमेयायै नमः ।
ॐ आत्मने नमः ।
ॐ परमायै नमः ।
ॐ पावनाकृतये नमः ।
ॐ अनेककोटिब्रह्माण्डजनन्यै नमः । ॥ ६२० ॥
ॐ दिव्यविग्रहायै नमः ।
ॐ क्लींकार्यै नमः ।

ॐ केवलायै नमः ।
ॐ गुह्यायै नमः ।
ॐ कैवल्यपददायिन्यै नमः ।
ॐ त्रिपुरायै नमः ।
ॐ त्रिजगद्वन्द्यायै नमः ।
ॐ त्रिमूर्त्यै नमः ।
ॐ त्रिदशेश्वर्यै नमः ।
ॐ त्र्यक्षर्यै नमः । ॥ ६३० ॥
ॐ दिव्यगन्धाढ्यायै नमः ।
ॐ सिन्दूरतिलकाञ्चितायै नमः ।
ॐ उमायै नमः ।
ॐ शैलेन्द्रतनयायै नमः ।
ॐ गौर्यै नमः ।
ॐ गन्धर्वसेवितायै नमः ।
ॐ विश्वगर्भायै नमः ।
ॐ स्वर्णगर्भायै नमः ।
ॐ अवरदायै नमः ।
ॐ वागधीश्वर्यै नमः । ॥ ६४० ॥
ॐ ध्यानगम्यायै नमः ।
ॐ अपरिच्छेद्यायै नमः ।
ॐ ज्ञानदायै नमः ।
ॐ ज्ञानविग्रहायै नमः ।
ॐ सर्ववेदान्तसंवेद्यायै नमः ।
ॐ सत्यानन्दस्वरूपिण्यै नमः ।
ॐ लोपामुद्रार्चितायै नमः ।
ॐ लीलाक्लृप्तब्रह्माण्डमण्डलायै नमः ।
ॐ अदृश्यायै नमः ।
ॐ दृश्यरहितायै नमः । ॥ ६५० ॥
ॐ विज्ञात्र्यै नमः ।
ॐ वेद्यवर्जितायै नमः ।
ॐ योगिन्यै नमः ।
ॐ योगदायै नमः ।
ॐ योग्यायै नमः ।
ॐ योगानन्दायै नमः ।
ॐ युगन्धरायै नमः ।

ॐ इच्छाशक्तिज्ञानशक्तिक्रियाशक्ति-
स्वरूपिण्यै नमः ।
ॐ सर्वाधारायै नमः ।
ॐ सुप्रतिष्ठायै नमः । ॥ ६६० ॥
ॐ सदसद्रूपधारिण्यै नमः ।
ॐ अष्टमूर्त्यै नमः ।
ॐ अजाजैत्र्यै नमः ।
ॐ लोकयात्राविधायिन्यै नमः ।
ॐ एकाकिन्यै नमः ।
ॐ भूमरूपायै नमः ।
ॐ निर्द्वैतायै नमः ।
ॐ द्वैतवर्जितायै नमः ।
ॐ अन्नदायै नमः ।
ॐ वसुदायै नमः । ॥ ६७० ॥
ॐ वृद्धायै नमः ।
ॐ ब्रह्मात्मैक्यस्वरूपिण्यै नमः ।
ॐ बृहत्यै नमः ।
ॐ ब्राह्मण्यै नमः ।
ॐ ब्राह्म्यै नमः ।
ॐ ब्रह्मानन्दायै नमः ।
ॐ बलिप्रियायै नमः ।
ॐ भाषारूपायै नमः ।
ॐ बृहत्सेनायै नमः ।
ॐ भावाभावविवर्जितायै
नमः ॥ ६८० ॥
ॐ सुखाराध्यायै नमः ।
ॐ शुभकर्यै नमः ।
ॐ शोभनासुलभागत्यै नमः ।
ॐ राजराजेश्वर्यै नमः ।
ॐ राज्यदायिन्यै नमः ।
ॐ राज्यवल्लभायै नमः ।
ॐ राजत्कृपायै नमः ।
ॐ राजपीठनिवेशितनिजाश्रितायै
नमः ।
ॐ राज्यलक्ष्म्यै नमः ।

ॐ कोशनाथायै नमः । ॥ ६९० ॥
ॐ चतुरङ्गबलेश्वर्यै नमः ।
ॐ साम्राज्यदायिन्यै नमः ।
ॐ सत्यसन्धायै नमः ।
ॐ सागरमेखलायै नमः ।
ॐ दीक्षितायै नमः ।
ॐ दैत्यशमन्यै नमः ।
ॐ सर्वलोकवशङ्कर्यै नमः ।
ॐ सर्वार्थदात्र्यै नमः ।
ॐ सावित्र्यै नमः ।
ॐ सच्चिदानन्दरूपिण्यै नमः ॥७००॥
ॐ देशकालापरिच्छिन्नायै नमः ।
ॐ सर्वगायै नमः ।
ॐ सर्वमोहिन्यै नमः ।
ॐ सरस्वत्यै नमः ।
ॐ शास्त्रमय्यै नमः ।
ॐ गुहाम्बायै नमः ।
ॐ गुह्यरूपिण्यै नमः ।
ॐ सर्वोपाधिविनिर्मुक्तायै नमः ।
ॐ सदाशिवपतिव्रतायै नमः ।
ॐ सम्प्रदायेश्वर्यै नमः । ॥ ७१० ॥
ॐ साध्व्यै नमः ।
ॐ यै नमः ।
ॐ गुरुमण्डलरूपिण्यै नमः ।
ॐ कुलोत्तीर्णायै नमः ।
ॐ भगाराध्यायै नमः ।
ॐ मायायै नमः ।
ॐ मधुमत्यै नमः ।
ॐ मह्यै नमः ।
ॐ गणाम्बायै नमः ।
ॐ गुह्यकाराध्यायै नमः ॥ ७२० ॥
ॐ कोमलाङ्ग्यै नमः ।
ॐ गुरुप्रियायै नमः ।
ॐ स्वतन्त्रायै नमः ।
ॐ सर्वतन्त्रेश्यै नमः ।
ॐ दक्षिणामूर्तिरूपिण्यै नमः ।
ॐ सनकादिसमाराध्यायै नमः
ॐ शिवज्ञानप्रदायिन्यै नमः ।
ॐ चित्कलायै नमः ।
ॐ आनन्दकलिकायै नमः ।
ॐ प्रेमरूपायै नमः । ॥ ७३० ॥
ॐ प्रियङ्कर्यै नमः ।
ॐ नामपारायणप्रीतायै नमः ।
ॐ नन्दिविद्यायै नमः ।
ॐ नटेश्वर्यै नमः ।
ॐ मिथ्याजगदधिष्ठानायै नमः ।
ॐ मुक्तिदायै नमः ।
ॐ मुक्तिरूपिण्यै नमः ।
ॐ लास्यप्रियायै नमः ।
ॐ लयकर्यै नमः ।
ॐ लज्जायै नमः । ॥ ७४० ॥
ॐ रम्भादिवन्दितायै नमः ।
ॐ भवदावसुधावृष्टयै नमः ।
ॐ पापारण्यदवानलायै नमः ।
ॐ दौर्भाग्यतूलवातूलायै नमः ।
ॐ जराध्वान्तरविप्रभायै नमः ।
ॐ भाग्याब्धिचन्द्रिकायै नमः ।
ॐ भक्तचित्तकेकिघनाघनायै नमः ।
ॐ रोगपर्वतदम्भोलये नमः ।
ॐ मृत्युदारुकुठारिकायै नमः ।
ॐ महेश्वर्यै नमः । ॥ ७५० ॥
ॐ महाकाल्यै नमः ।
ॐ महाग्रासायै नमः ।
ॐ महाशनायै नमः ।
ॐ अपर्णायै नमः ।
ॐ चण्डिकायै नमः ।
ॐ चण्डमुण्डासुरनिषूदन्यै नमः ।
ॐ क्षराक्षरात्मिकायै नमः ।
ॐ सर्वलोकेश्यै नमः ।
ॐ विश्वधारिण्यै नमः ।

ॐ त्रिवर्गदात्र्यै नमः । ॥ ७६० ॥
ॐ सुभगायै नमः ।
ॐ त्र्यम्बकायै नमः ।
ॐ त्रिगुणात्मिकायै नमः ।
ॐ स्वर्गापवर्गदायै नमः ।
ॐ शुद्धायै नमः ।
ॐ जपापुष्पनिभाकृतये नमः ।
ॐ ओजोवत्यै नमः ।
ॐ द्युतिधरायै नमः ।
ॐ यज्ञरूपायै नमः ।
ॐ प्रियव्रतायै नमः । ॥ ७७० ॥
ॐ दुराराध्यायै नमः ।
ॐ दुराधर्षायै नमः ।
ॐ पाटलीकुसुमप्रियायै नमः ।
ॐ महत्यै नमः ।
ॐ मेरुनिलयायै नमः ।
ॐ मन्दारकुसुमप्रियायै नमः ।
ॐ वीराराध्यायै नमः ।
ॐ विराड्रूपायै नमः ।
ॐ विरजायै नमः ।
ॐ विश्वतोमुख्यै नमः । ॥ ७८० ॥
ॐ प्रत्यग्रूपायै नमः ।
ॐ पराकाशायै नमः ।
ॐ प्राणदायै नमः ।
ॐ प्राणरूपिण्यै नमः ।
ॐ मार्तण्डभैरवाराध्यायै नमः ।
ॐ मन्त्रिणीन्यस्तराज्यधुरे नमः ।
ॐ त्रिपुरेश्यै नमः ।
ॐ जयत्सेनायै नमः ।
ॐ निस्त्रैगुण्यायै नमः ।
ॐ परापरायै नमः । ॥ ७९० ॥
ॐ सत्यज्ञानानन्दरूपायै नमः ।
ॐ सामरस्यपरायणायै नमः ।
ॐ कपर्दिन्यै नमः ।
ॐ कलामालायै नमः ।
ॐ कामदुघे नमः ।
ॐ कामरूपिण्यै नमः ।
ॐ कलानिधये नमः ।
ॐ काव्यकलायै नमः ।
ॐ रसज्ञायै नमः ।
ॐ रसशेवधये नमः । ॥ ८०० ॥
ॐ पुष्टायै नमः ।
ॐ पुरातनायै नमः ।
ॐ पूज्यायै नमः ।
ॐ पुष्करायै नमः ।
ॐ पुष्करेक्षणायै नमः ।
ॐ परस्मै ज्योतिषे नमः ।
ॐ परस्मै धाम्ने नमः ।
ॐ परमाणवे नमः ।
ॐ परात्परायै नमः ।
ॐ पाशहस्तायै नमः । ॥ ८१० ॥
ॐ पाशहन्त्र्यै नमः ।
ॐ परमन्त्रविभेदिन्यै नमः ।
ॐ मूर्तायै नमः ।
ॐ अमूर्तायै नमः ।
ॐ अनित्यतृप्तायै नमः ।
ॐ मुनिमानसहंसिकायै नमः ।
ॐ सत्यव्रतायै नमः ।
ॐ सत्यरूपायै नमः ।
ॐ सर्वान्तर्यामिन्यै नमः ।
ॐ सत्यै नमः । ॥ ८२० ॥
ॐ ब्रह्माण्यै नमः ।
ॐ ब्रह्मणे नमः ।
ॐ जनन्यै नमः ।
ॐ बहुरूपायै नमः ।
ॐ बुधार्चितायै नमः ।
ॐ प्रसवित्र्यै नमः ।
ॐ प्रचण्डायै नमः ।
ॐ आज्ञायै नमः ।
ॐ प्रतिष्ठायै नमः ।

ॐ प्रकटाकृतये नमः । ॥ ८३० ॥
ॐ प्राणेश्वर्यै नमः ।
ॐ प्राणदात्र्यै नमः ।
ॐ पञ्चाशत्पीठरूपिण्यै नमः ।
ॐ विशृङ्खलायै नमः ।
ॐ विविक्तस्थायै नमः ।
ॐ वीरमात्रे नमः ।
ॐ वियत्प्रसवे नमः ।
ॐ मुकुन्दायै नमः ।
ॐ मुक्तिनिलयायै नमः ।
ॐ मूलविग्रहरूपिण्यै नमः ।
ॐ भावज्ञायै नमः । ॥ ८४० ॥
ॐ भवरोगघ्न्यै नमः ।
ॐ भवचक्रप्रवर्तिन्यै नमः ।
ॐ छन्दःसारायै नमः ।
ॐ शास्त्रसारायै नमः ।
ॐ मन्त्रसारायै नमः ।
ॐ तलोदर्यै नमः ।
ॐ उदारकीर्तये नमः ।
ॐ उद्दामवैभवायै नमः ।
ॐ वर्णरूपिण्यै नमः । ॥ ८५० ॥
ॐ जन्ममृत्युजरातप्तजनविश्रान्ति-
दायिन्यै नमः ।
ॐ सर्वोपनिषदुद्घुष्टायै नमः ।
ॐ शान्त्यतीताकलात्मिकायै नमः ।
ॐ गम्भीरायै नमः ।
ॐ गगनान्तःस्थायै नमः ।
ॐ गर्वितायै नमः ।
ॐ गानलोलुपायै नमः ।
ॐ कल्पनारहितायै नमः ।
ॐ काष्ठायै नमः ।
ॐ अकान्तायै नमः । ॥ ८६० ॥
ॐ कान्तार्धविग्रहायै नमः ।
ॐ कार्यकारणनिर्मुक्तायै नमः ।
ॐ कामकेलितरङ्गितायै नमः ।

ॐ कनत्कनकताटङ्कायै नमः ।
ॐ लीलाविग्रहधारिण्यै नमः ।
ॐ अजायै नमः ।
ॐ क्षयविनिर्मुक्तायै नमः ।
ॐ मुग्धायै नमः ।
ॐ क्षिप्रप्रसादिन्यै नमः ।
ॐ अन्तर्मुखसमाराध्यायै नमः ॥ ८७० ॥
ॐ बहिर्मुखसुदुर्लभायै नमः ।
ॐ त्रय्यै नमः ।
ॐ त्रिवर्गनिलयायै नमः ।
ॐ त्रिस्थायै नमः ।
ॐ त्रिपुरमालिन्यै नमः ।
ॐ निरामयायै नमः ।
ॐ निरालम्बायै नमः ।
ॐ स्वात्मारामायै नमः ।
ॐ सुधास्रुत्यै नमः ।
ॐ संसारपङ्कनिर्मग्नसमुद्धरण-
पण्डितायै नमः । ॥ ८८० ॥
ॐ यज्ञप्रियायै नमः ।
ॐ यज्ञकर्त्र्यै नमः ।
ॐ यजमानस्वरूपिण्यै नमः ।
ॐ धर्माधारायै नमः ।
ॐ धनाध्यक्षायै नमः ।
ॐ धनधान्यविवर्धिन्यै नमः ।
ॐ विप्रप्रियायै नमः ।
ॐ विप्ररूपायै नमः ।
ॐ विश्वभ्रमणकारिण्यै नमः ।
ॐ विश्वग्रासायै नमः । ॥ ८९० ॥
ॐ विद्रुमाभायै नमः ।
ॐ वैष्णव्यै नमः ।
ॐ विष्णुरूपिण्यै नमः ।
ॐ अयोनये नमः ।
ॐ योनिनिलयायै नमः ।
ॐ कूटस्थायै नमः ।
ॐ कुलरूपिण्यै नमः ।

ॐ वीरगोष्ठीप्रियायै नमः ।
ॐ वीरायै नमः ।
ॐ नैष्कर्म्यायै नमः । ॥ ९०० ॥
ॐ नादरूपिण्यै नमः ।
ॐ विज्ञानकलनायै नमः ।
ॐ कल्यायै नमः ।
ॐ विदग्धायै नमः ।
ॐ बैन्दवासनायै नमः ।
ॐ तत्त्वाधिकायै नमः ।
ॐ तत्त्वमय्यै नमः ।
ॐ तत्त्वमर्थस्वरूपिण्यै नमः ।
ॐ सामगानप्रियायै नमः ।
ॐ सौम्यायै नमः । ॥ ९१० ॥
ॐ सदाशिवकुटुम्बिन्यै नमः ।
ॐ सव्यापसव्यमार्गस्थायै नमः ।
ॐ सर्वापद्विनिवारिण्यै नमः ।
ॐ स्वस्थायै नमः ।
ॐ स्वभावमधुरायै नमः ।
ॐ धीरायै नमः ।
ॐ धीरसमर्चितायै नमः ।
ॐ चैतन्यार्घ्यसमाराध्यायै नमः ।
ॐ चैतन्यकुसुमप्रियायै नमः ।
ॐ सदोदितायै नमः । ॥ ९२० ॥
ॐ सदा तुष्टायै नमः ।
ॐ तरुणादित्यपाटलायै नमः ।
ॐ दक्षिणादक्षिणाराध्यायै नमः ।
ॐ दरस्मेरमुखाम्बुजायै नमः ।
ॐ कौलिनीकेवलायै नमः ।
ॐ अनर्घ्यकैवल्यफलदायिन्यै नमः ।
ॐ स्तोत्रप्रियायै नमः ।
ॐ स्तुतिमत्यै नमः ।
ॐ श्रुतिसंस्तुतवैभवायै नमः ।
ॐ मनस्विन्यै नमः । ॥ ९३० ॥
ॐ मानवत्यै नमः ।
ॐ महेश्यै नमः ।
ॐ मङ्गलाकृत्यै नमः ।
ॐ विश्वमात्रे नमः ।
ॐ जगद्धात्र्यै नमः ।
ॐ विशालाक्ष्यै नमः ।
ॐ विरागिण्यै नमः ।
ॐ प्रगल्भायै नमः ।
ॐ परमोदारायै नमः ।
ॐ परामोदायै नमः । ॥ ९४० ॥
ॐ मनोमय्यै नमः ।
ॐ व्योमकेश्यै नमः ।
ॐ विमानस्थायै नमः ।
ॐ वज्रिण्यै नमः ।
ॐ वामकेश्वर्यै नमः ।
ॐ पञ्चयज्ञप्रियायै नमः ।
ॐ पञ्चप्रेतमञ्चाधिशायिन्यै नमः ।
ॐ पञ्चम्यै नमः ।
ॐ पञ्चभूतेश्यै नमः ।
ॐ पञ्चसङ्ख्योपचारिण्यै नमः ॥९५०॥
ॐ शाश्वत्यै नमः ।
ॐ शाश्वतैश्वर्यायै नमः ।
ॐ शर्मदायै नमः ।
ॐ शम्भुमोहिन्यै नमः ।
ॐ धरायै नमः ।
ॐ धरसुतायै नमः ।
ॐ धन्यायै नमः ।
ॐ धर्मिण्यै नमः ।
ॐ धर्मवर्धिन्यै नमः ।
ॐ लोकातीतायै नमः । ॥ ९६० ॥
ॐ गुणातीतायै नमः ।
ॐ सर्वातीतायै नमः ।
ॐ शमात्मिकायै नमः ।
ॐ बन्धूककुसुमप्रख्यायै नमः ।
ॐ बालायै नमः ।
ॐ लीलाविनोदिन्यै नमः ।
ॐ सुमङ्गल्यै नमः ।

ॐ सुखकर्यै नमः ।
ॐ सुवेषाढ्यायै नमः ।
ॐ सुवासिन्यै नमः । ॥ ९७० ॥
ॐ सुवासिन्यर्चनप्रीतायै नमः ।
ॐ आशोभनायै नमः ।
ॐ शुद्धमानसायै नमः ।
ॐ बिन्दुतर्पणसन्तुष्टायै नमः ।
ॐ पूर्वजायै नमः ।
ॐ त्रिपुराम्बिकायै नमः ।
ॐ दशमुद्रासमाराध्यायै नमः ।
ॐ त्रिपुराश्रीवशङ्कर्यै नमः ।
ॐ ज्ञानमुद्रायै नमः ।
ॐ ज्ञानगम्यायै नमः । ॥ ९८० ॥
ॐ ज्ञानज्ञेयस्वरूपिण्यै नमः ।
ॐ योनिमुद्रायै नमः ।
ॐ त्रिखण्डेश्यै नमः ।
ॐ त्रिगुणायै नमः ।
ॐ अम्बायै नमः ।
ॐ त्रिकोणगायै नमः ।
ॐ अनघायै नमः ।
ॐ अद्भुतचारित्रायै नमः ।
ॐ वाञ्छितार्थप्रदायिन्यै नमः ।
ॐ अभ्यासातिशयज्ञातायै नमः ॥९९०।
ॐ षडध्वातीतरूपिण्यै नमः ।
ॐ अव्याजकरुणामूर्तये नमः ।
ॐ अज्ञानध्वान्तदीपिकायै नमः ।
ॐ आबालगोपविदितायै नमः ।
ॐ सर्वानुल्लङ्घ्यशासनायै नमः ।
ॐ श्रीचक्रराजनिलयायै नमः ।
ॐ श्रीमत्त्रिपुरसुन्दर्यै नमः ।
ॐ श्रीशिवायै नमः ।
ॐ शिवशक्त्यैक्यरूपिण्यै नमः ।
ॐ ऐं ह्रीं श्रीं ललिताम्बिकायै नमः । ॥ १००० ॥

---

# ललितात्रिशतीस्तोत्रम्

अगस्त्य उवाच—

हयग्रीवदयासिन्धो भगवन् शिष्यवत्सल ।
त्वत्तः श्रुतमशेषेण श्रोतव्यं यद् यदस्ति तत् ॥ १ ॥
रहस्यनामसाहस्रमपि त्वत्तः श्रुतं मया ।
इतः परं मे नास्त्येव श्रोतव्यमिति निश्चयः ॥ २ ॥
तथापि मम चित्तस्य पर्याप्तिर्नैव जायते ।
कात्स्न्यार्थः प्राप्य इत्येव शोचयिष्याम्यहं प्रभो ॥ ३ ॥
किमिदं कारणं ब्रूहि ज्ञातव्यांशोऽस्ति वा पुनः ।
अस्ति चेन्मम तद् ब्रूहीत्युक्त्वाऽगस्त्यः प्रणम्य तम् ॥ ४ ॥

सूत उवाच—

समाललम्बे तत्पादयुगलं कलशोद्भवः ।
हयाननो भीतभीतः किमिदं किमिदं त्विति ॥ ५ ॥
मुञ्च मुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः ।
चिरं विचार्य निश्चिन्वन् वक्तव्यं न मयेत्यसौ ॥ ६ ॥
तूष्णीं स्थितः स्मरन्नाज्ञां ललिताम्बाकृतां पुरा ।
प्रणम्य विप्रं स मुनिस्तत्पादावत्यजन् स्थितः ॥ ७ ॥
वर्षत्रयावधि तथा गुरुशिष्यौ तथा स्थितौ ।
तच्छृण्वन्तश्च पश्यन्तः सर्वे लोकाः सुविस्मिताः ॥ ८ ॥
ततः श्रीललितादेवी कामेश्वरसमन्विता ।
प्रादुर्भूय हयग्रीवं रहस्येदमचोदयत् ॥ ९ ॥

श्रीदेव्युवाच—

अश्वाननावयोः प्रीतिः शास्त्रविश्वासिनि त्वयि ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥ १० ॥
स्वमातृवत्सदागोप्या विद्यैषेत्यागमा जगुः ।
ततोऽतिगोपनीया मे सर्वपूर्तिकरी स्तुतिः ॥ ११ ॥
मया कामेश्वरेणापि कृता सङ्गोपिता भृशम् ।
मदाज्ञया वचो देव्यश्चक्रुर्नामसहस्रकम् ॥ १२ ॥
आवाभ्यां कथिता मुख्या सर्वपूर्तिकरी स्तुतिः ।
सर्वक्रियाणां वैकल्यपूर्तिर्यज्जपतो भवेत् ॥ १३ ॥

सर्वपूर्तिकरं तस्मादिदं नाम कृतं मया ।
तद् ब्रूहि त्वमगस्त्याय पात्रमेव न संशयः ।। १४ ।।
लोपामुद्रेति तत्पत्नी मामुपास्तेऽतिभक्तितः ।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत् ।। १५ ।।
अमुञ्चमानस्त्वत्पादौ वर्षत्रयमसौ स्थितः ।
एतज्ज्ञातुमतो भक्त्या हीदमेव निदर्शनम् ।। १६ ।।
चित्तपर्याप्तिरेतस्य नान्यथा सम्भविष्यति ।
सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद ।। १७ ।।

**सूत उवाच—**

इत्युक्त्वान्तरधादम्बा कामेश्वरसमन्विता ।
अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसम्भवम् ।। १८ ।।
संस्थाप्य निकटे वाचमुवाच भृश विस्मितः ।

**हयग्रीव उवाच—**

कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव ।। १९ ।।
त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये ।
येनागस्त्य स्वयं देवी तव वक्तव्यमन्वशात् ।। २० ।।
सच्छिष्येण त्वया चाहं दृष्टवानस्मि तां शिवाम् ।
यतन्ते यद्दर्शनाय ब्रह्मविष्णवीशपूर्वकाः ।। २१ ।।
अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम् ।
यस्य स्मरणमात्रेण पर्याप्तिस्ते भवेद् हृदि ।। २२ ।।
रहस्यनामसाहस्रादपि गुह्यतमं मुने ।
आवश्यकं ततोऽप्येतल्ललितां समुपासितुम् ।। २३ ।।
तदहं सम्प्रवक्ष्यामि ललिताम्बानुशासनात् ।
श्रीमत्पञ्चादशाक्षर्याः कादिवर्णान् क्रमान्मुने ।। २४ ।।
पृथग् विंशतिनामानि कथितानि घटोद्भव ।
आहृत्य नाम्नां त्रिशती सर्वसम्पूर्तिकारिणी ।। २५ ।।
रहस्यातिरहस्यैषा गोपनीया प्रयत्नतः ।
तां शृणुष्व महाभाग सावधानेन चेतसा ।। २६ ।।
केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज ।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ।। २७ ।।
तस्मादेकाग्रमनसा श्रोतव्यं च त्वया सदा ।

**सूत उवाच—**

इत्युक्त्वा तं हयग्रीवः प्रोचे नामशतत्रयम् ।। २८ ।।

अस्य श्रीललितात्रिशतीस्तोत्रमहामन्त्रस्य भगवान् हयग्रीव ऋषिः अनुष्टुप्छन्दः श्रीललितात्रिपुरसुन्दरी देवता ऐं बीजं सौः शक्तिः क्लीं कीलकं मम चतुर्विधपुरुषार्थसिद्ध्यर्थे जपे विनियोगः । ऐं अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । सौः मध्यमाभ्यां नमः । ऐं अनामिकाभ्यां नमः । क्लीं कनिष्ठिकाभ्यां नमः । सौः करतलकरपृष्ठाभ्यां नमः । ऐं हृदयाय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट् । ऐं कवचाय हुं । क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट् । भूर्भुवः स्वरोमिति दिग्बन्धः । ध्यानम्—अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम् । अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे । लं इत्यादि पञ्चपूजां कृत्वा ॥ २९ ॥

**हयग्रीव उवाच—**

ककाररूपा कल्याणी कल्याणगुणशालिनी ।
कल्याणशैलनिलया कमनीया कलावती ॥ ३० ॥
कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।
कदम्बकाननावासा कदम्बकुसुमप्रिया ॥ ३१ ॥
कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा ।
कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटा ॥ ३२ ॥
कलिदोषहरा कञ्जलोचना कम्रविग्रहा ।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ॥ ३३ ॥
एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः ।
एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः ॥ ३४ ॥
एवमित्यागमाबोध्या चैकभक्तिमदर्चिता ।
एकाग्रचित्तनिर्ध्याता चैषणारहितादृता ॥ ३५ ॥
एलासुगन्धिचिकुरा चैनःकूटविनाशिनी ।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी ॥ ३६ ॥
एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता ।
एधमानप्रभा चैजदनेकजगदीश्वरी ॥ ३७ ॥
एकवीरादिसंसेव्या चैकप्राभवशालिनी ।
ईकाररूपा चेशित्री चेप्सितार्थप्रदायिनी ॥ ३८ ॥
ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी ।
ईशानादि ब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा ॥ ३९ ॥
ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।
ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता ॥ ४० ॥

ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।
ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥ ४१ ॥
ईहाविरहिता चेशशक्तिरीषत्स्मिताननना ।
लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ॥ ४२ ॥
लाकिनी ललनारूपा लसद्दाडिमपाटला ।
ललन्तिका लसत्फाला ललाटनयनार्चिता ॥ ४३ ॥

लक्षणोज्ज्वलदिव्याङ्गी लक्षकोटचण्डनायिका ।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ॥ ४४ ॥
ललामराजदलिका लम्बिमुक्तालताञ्चिता ।
लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥ ४५ ॥
ह्रींकाररूपा ह्रींकारनिलया ह्रींपदप्रिया ।
ह्रींकारबीजा ह्रींकारमन्त्रा ह्रींकारलक्षणा ॥ ४६ ॥

ह्रींकारजपसुप्रीता ह्रींमती ह्रींविभूषणा ।
ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥ ४७ ॥
ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका ।
ह्रींकारवेद्या ह्रींकारचिन्त्या ह्रीं ह्रींशरीरिणी ॥ ४८ ॥

हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ॥ ४९ ॥
हयारूढासेविताङ्घ्रिर्हयमेधसमर्चिता ।
हर्यक्षवाहना हंसवाहना हतदानवा ॥ ५० ॥

हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥ ५१ ॥
हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हालामदालसा ॥ ५२ ॥
सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।
सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातना ॥ ५३ ॥

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥ ५४ ॥
सर्वाधारा सर्वगता सर्वावगुणवर्जिता ।
सर्वारुणा सर्वमाता सर्वभूषणभूषिता ॥ ५५ ॥
ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
कामसञ्जीवनी कल्या कठिनस्तनमण्डला ॥ ५६ ॥

करभोरुः कलानाथमुखी कचजिताम्बुदा ।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका ॥ ५७ ॥
कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः ।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥ ५८ ॥
कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता ।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ॥ ५९ ॥
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।
हरित्पतिसमाराध्या हठात्कारहतासुरा ॥ ६० ॥
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा ।
हल्लीसलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥ ६१ ॥
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥ ६२ ॥
हैय्यङ्गवीनहृदया हरिगोपारुणांशुका ।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ॥ ६३ ॥
लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता ।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥ ६४ ॥
लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता ।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥ ६५ ॥
लग्नचामरहस्तश्रीशारदापरिवीजिता ।
लज्जापदसमाराध्या लम्पटा लकुलेश्वरी ॥ ६६ ॥
लब्धमानालब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रींकारिणी ह्रींकाराद्या ह्रींमध्या ह्रींशिखामणिः ॥ ६७ ॥
ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।
ह्रींकारभास्कररुचिः ह्रींकाराम्भोदचञ्चला ॥ ६८ ॥
ह्रींकारकन्दाङ्कुरिका ह्रींकारैकपरायणा ।
ह्रींकारदीर्घिकाहंसी ह्रींकारोद्यानकेकिनी ॥ ६९ ॥
ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी ।
ह्रींकारपञ्जरशुकी ह्रींकाराङ्गणदीपिका ॥ ७० ॥
ह्रींकारकन्दरासिंही ह्रींकाराम्भोजभृङ्गिका ।
ह्रींकारसुमनोमाध्वी ह्रींकारतरुमञ्जरी ॥ ७१ ॥
सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ॥ ७२ ॥

सकला सच्चिदानन्दा साध्यासद्गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥ ७३ ॥
सकलाधिष्ठानरूपा सत्यरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ॥ ७४ ॥
सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा ।
ककारिणी काव्यलोला कामेश्वरमनोहरा ॥ ७५ ॥
कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥ ७६ ॥
कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपःसिद्धिः कामेश्वरमनःप्रिया ॥ ७७ ॥
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥ ७८ ॥
कामेश्वराह्लादकरी कामेश्वरमहेश्वरी ।
कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा ॥ ७९ ॥
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ॥ ८० ॥
लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ॥ ८१ ॥
लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।
लब्धरागा लब्धपतिः लब्धनानागमस्थितिः ॥ ८२ ॥
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता ।
ह्रींकारमूर्तिर्ह्रींकार-सौधशृङ्गकपोतिका ॥ ८३ ॥
ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा ।
ह्रींकारमणिदीपार्चिर्ह्रींकारतरुशारिका ॥ ८४ ॥
ह्रींकारपेटकमणिर्ह्रींकारादर्शबिम्बिता ।
ह्रींकारकोशासिलता ह्रींकारास्थाननर्तकी ॥ ८५ ॥
ह्रींकारशुक्तिकामुक्तामणिर्ह्रींकारबोधिता ।
ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥ ८६ ॥
ह्रींकारवेदोपनिषद् ह्रींकाराध्वरदक्षिणा ।
ह्रींकारनन्दनाराम नवकल्पकवल्लरी ॥ ८७ ॥
ह्रींकारहिमवद्गङ्गा ह्रींकारार्णवकौस्तुभा ।
ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदा ॥ ८८ ॥

( फलश्रुतिः )

इत्येवं ते मयाख्यातं देव्या नामशतत्रयम् ।
रहस्यातिरहस्यत्वाद् गोपनीयं त्वया मुने ॥ ८९ ॥
शिववर्णानि नामानि श्रीदेव्याः कथितानि हि ।
शक्त्यक्षराणि नामानि कामेशकथितानि च ॥ ९० ॥
उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै ।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ॥ ९१ ॥
नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम् ।
लोकत्रयेऽपि कल्याणं सम्भवेन्नात्र संशयः ॥ ९२ ॥

इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य ।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तं
पुनरधिकरहस्यं ज्ञातुमेवं जगाद ॥ ९३ ॥

अगस्त्य उवाच—

अश्वानन महाभाग रहस्यमपि मे वद ।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि ॥ ९४ ॥
उभयोरपि वर्णानि कानि वा वद देशिक ।
इति पृष्टः कुम्भजेन हयग्रीवोऽवदत् पुनः ॥ ९५ ॥
तव गोप्यं किमस्तीह साक्षादम्बानुशासनात् ।
इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज ॥ ९६ ॥
एतद् विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत् ।
कत्रयं हृद्वयं चैव शैवो भागः प्रकीर्तितः ॥ ९७ ॥
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः ।
एवं विभागमज्ञात्वा ये विद्याजपशालिनः ॥ ९८ ॥
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि ।
चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ॥ ९९ ॥
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ।
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ॥ १०० ॥
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ।
विन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ॥ १०१ ॥
चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात् ।
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ॥ १०२ ॥

दशारयोः षोडशारं भूगृहं भुवनाश्रये ।
शैवानामपि शाक्तानां चक्राणां च परस्परम् ॥ १०३ ॥
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपपरः शिवः ॥ १०४ ॥
अविनाभावसम्बन्धं तस्माद् बिन्दुत्रिकोणयोः ।
एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ॥ १०५ ॥
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति ।
ये च जानन्ति लोकेऽस्मिन् श्रीविद्याचक्रवेदिनः ॥ १०६ ॥
सामान्यवेदिनः सर्वे विशेषज्ञोऽतिदुर्लभः ।
स्वयं विद्याविशेषज्ञो विशेषज्ञं समर्चयेत् ॥ १०७ ॥
तस्मै देयं ततो ग्राह्यमशक्तस्तस्य दापयेत् ।
अन्धंतमः प्रविशन्ति येऽविद्यां समुपासते ॥ १०८ ॥
इति श्रुतिरपाहैतानविद्योपासकान् पुनः ।
विद्यान्योपासकानेव निन्दत्यारुणिकी श्रुतिः ॥ १०९ ॥
अश्रुताः सश्रुता ये च यज्वानो येऽप्ययज्वनः ।
नापेक्षन्ते स्वर्गगता इन्द्रमग्निं च ये विदुः ॥ ११० ॥
सिकता इव संयन्ति रश्मिभिः समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्याह चारण्यकश्रुतिः ॥ १११ ॥
यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥ ११२ ॥
इति मन्त्रेषु बहुधा विद्याया महिमोच्यते ।
मोक्षैकहेतुर्विद्या तु श्रीविद्या नात्र संशयः ॥ ११३ ॥
न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।
मोक्षैकहेतुर्विद्या सा श्रीविद्यैव न संशयः ॥ ११४ ॥
तस्माद् विद्याविदेवात्र विद्वान् विद्वानितीर्यते ।
स्वयं विद्याविदे दद्यात् ख्यापयेत्तद्गुणान् सुधीः ॥ ११५ ॥
स्वयं विद्यारहस्यज्ञो विद्यामाहात्म्यवेद्यपि ।
विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः ॥ ११६ ॥
प्रसङ्गादिदमुक्तं ते प्रकृतं शृणु कुम्भज ।
यः कीर्तयेत् सकृद् भक्त्या दिव्यनामशतत्रयम् ॥ ११७ ॥
तस्य पुण्यमहं वक्ष्ये शृणु त्वं कुम्भसम्भव ।
रहस्यनामसाहस्रपाठे यत्फलमीरितम् ॥ ११८ ॥

तत्फलं कोटिगुणितमेकं नामजपाद् भवेत् ।
कामेश्वरीकामेशाभ्यां कृतं नाम शतत्रयम् ॥ ११९ ॥
नान्येन तुलयेदेतत् स्तोत्रेणान्यकृतेन च ।
श्रियः परम्परा यस्य भावि वा चोत्तरोत्तरम् ॥ १२० ॥
तेनैव लभ्यते चैतत् पश्चाच्छ्रेयः परीक्षयेत् ।
अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते ॥ १२१ ॥
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिस्सृता ।
नित्यं षोडशसंख्याकान् विप्रानादौ तु भोजयेत् ॥ १२२ ॥
अभ्यक्तांस्तिलतैलेन स्नातानुष्णेन वारिणा ।
अभ्यर्च्य गन्धपुष्पाद्यैः कामेश्वर्यादिनामभिः ॥ १२३ ॥
सूपापूपैः शर्कराद्यैः पायसैः फलसंयुतैः ।
विद्याविदो विशेषेण भोजयेत् षोडशद्विजान् ॥ १२४ ॥
एवं नित्यार्चनं कुर्यादादौ ब्राह्मणभोजनम् ।
त्रिशतीनामभिः पश्चात् ब्राह्मणान् क्रमशोऽर्चयेत् ॥ १२५ ॥
तैलाभ्यङ्गादिकं दत्त्वा विभवे सति भक्तितः ।
शुक्लप्रतिपदारभ्य पौर्णमास्यावधिक्रमात् ॥ १२६ ॥
दिवसे दिवसे विप्रा भोज्या विंशतिसङ्ख्यया ।
दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः ॥ १२७ ॥
त्रिंशत्षष्टिः शतं विप्राः सम्भोज्यास्त्रिशतं क्रमात् ।
एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ॥ १२८ ॥
तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिरा ।
रहस्यनामसाहस्रभोजनेऽप्येवमेव हि ॥ १२९ ॥
आदौ नित्यं बलिं कुर्यात् पश्चाद् ब्राह्मणभोजनम् ।
रहस्यनामसाहस्रमहिमा यो मयोदितः ॥ १३० ॥
सशीकराणुरत्रैकनाम्नो महिमवारिधेः ।
वाग्देवीरचिते नामसाहस्रे यद्यदीरितम् ॥ १३१ ॥
तत्फलं कोटिगुणितं नाम्नोऽप्येकस्य कीर्तनात् ।
एतदन्यैर्जपैः स्तोत्रैरर्चनैर्यत्फलं भवेत् ॥ १३२ ॥
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ।
वाग्देवीरचितस्तोत्रे तादृशो महिमा यदि ॥ १३३ ॥
साक्षात् कामेशकामेशी कृतेऽस्मिन् गृह्यतामिति ।
सकृत् सङ्कीर्तनादेव नाम्नामस्मिन् शतत्रये ॥ १३४ ॥

भवेच्चित्तस्य पर्याप्तिर्न्यूनमन्यानपेक्षिणी ।
न ज्ञातव्यमितोऽप्यन्यन्न जप्तव्यं च कुम्भज ॥ १३५ ॥
यद्यत्साध्यतमं कार्यं तत्तदर्थमिदं जपेत् ।
तत्तत्फलमवाप्नोति पश्चात् कार्यं परीक्षयेत् ॥ १३६ ॥
ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत् साध्यते फलम् ।
तत्सर्वं सिध्यति क्षिप्रं नामत्रिशतकीर्तनात् ॥ १३७ ॥
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् ।
विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम् ॥ १३८ ॥
सर्वसम्पत्प्रदं सर्वभोगदं सर्वसौख्यदम् ।
सर्वाभीष्टप्रदं चैव देव्या नामशतत्रयम् ॥ १३९ ॥
एतज्जपपरो भूयान्नान्यदिच्छेत् कदाचन ।
एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका ॥ १४० ॥
भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम् ।
तस्मात्कुम्भोद्भव मुने कीर्तय त्वमिदं सदा ॥ १४१ ॥
नापरं किञ्चिदपि ते बोद्धव्यमवशिष्यते ।
इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम् ॥ १४२ ॥
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ॥ १४३ ॥
यो ब्रूयात् त्रिशतीं नाम्नां तस्यानर्थो महान् भवेत् ।
इत्याज्ञा शाङ्करी प्रोक्ता तस्माद् गोप्यमिदं त्वया ॥ १४४ ॥
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम् ।
रहस्यनामसाहस्रादपि गोप्यमिदं मुने ॥ १४५ ॥
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ।
स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम् ॥
आनन्दलहरीमग्नमानसः समवर्तत ॥ १४६ ॥

इति श्रीललितात्रिशतीस्तोत्रं सम्पूर्णम् ।

---

**भगवद्दुर्वाससा विरचितं**

# ललितास्तवरत्नम्

वन्दे गजेन्द्रवदनं वामाङ्कारूढवल्लभाश्लिष्टम् ।
कुङ्कुमपरागशोणं कुवलयिनीजार-कोरकापीडम् ॥ १ ॥
स जयति सुवर्णशैलः सकलजगच्चक्रसङ्घटितमूर्त्तिः ।
काञ्चन-निकुञ्ज-वाटी-कन्दल-दमरी-प्रपञ्च-सङ्गीतः ॥ २ ॥
हरिहय-नैर्ऋत-मारुतहरितामन्तेष्ववस्थितं तस्य ।
विनुमः सानुत्रितयं विधिहरिगौरीशविष्टपाधारम् ॥ ३ ॥
मध्ये पुनर्मनोहररत्न-रुचिस्तवक-रञ्जित-दिगन्तम् ।
उपरि चतुश्शतयोजनमुत्तुङ्गं शृङ्गपुङ्गवमुपासे ॥ ४ ॥
तत्र चतुश्शतयोजनपरिणाहं देवशिल्पिना रचितम् ।
नानासालमनोज्ञं नमाम्यहं नगरमादिविद्यायाः ॥ ५ ॥
प्रथमं सहस्रपूर्वकषट्शत-सङ्ख्याक-योजनं परितः ।
वलयीकृतस्वगात्रं वरणं शरणं व्रजाम्ययोरूपम् ॥ ६ ॥
तस्योत्तरे समीरणयोजनदूरे तरङ्गितच्छायः ।
घटयतु मुदं द्वितीयो घण्टास्तन-सार-निर्मितः सालः ॥ ७ ॥
उभयोरन्तरसीमन्युद्दामभ्रमररञ्जितोदारम् ।
उपवनमुपास्महे वयमूरीकृतमन्दमारुतस्यन्दम् ॥ ८ ॥
आलिङ्ग्य भद्रकालीमासीनस्तत्र हरिशिलाश्यामाम् ।
मनसि महाकालो मे विहरतु मधुपान-विभ्रमन्नेत्रः ॥ ९ ॥
तार्तीयीको वरणस्तस्योत्तरसीम्नि वातयोजनतः ।
ताम्रेण रचितमूर्तिस्तनुतामाचन्द्रतारकं भद्रम् ॥१०॥
मध्ये तयोश्च मणिमयपल्लव-शाखा-प्रसूनपक्ष्मलिताम् ।
कल्पानोकह-वाटीं कलये मकरन्द-पङ्किलावालाम् ॥११॥
तत्र मधुमाधवश्रीतरुणीभ्यां तरलदृक्चकोराभ्याम् ।
आलिङ्गितोऽवतान्मामनिशं प्रथमर्तुरात्तपुष्पास्त्रः ॥१२॥
नमत तदुत्तरभागे नाकिपथोल्लङ्घिशृङ्गसङ्घातम् ।
सीसाकृतिं तुरीयं सितकिरणालोकनिर्मलं सालम् ॥१३॥
सालद्वयान्तराले सरलालिकपोत-चाटुसुभगायाम् ।
सन्तान-वाटिकायां सक्तं चेतोऽस्तु सततमस्माकम् ॥१४॥

तत्र तपनातिरूक्षः सम्राज्ञीचरण-सान्द्रित-स्वान्तः ।
शुक्रशुचिश्रीसहितो ग्रीष्मर्तुर्दिशतु कीर्तिमाकल्पम् ॥१५॥
उत्तरसीमनि तस्योन्नतशिखरोत्कम्पि-हाटकपताकः ।
प्रकटयतु पञ्चमो नः प्राकारः कुशाश्मारकूटमयः ॥१६॥
प्राकारयोश्च मध्ये पल्लवितान्यभृतपञ्चमोन्मेषा ।
हरिचन्दनद्रुवाटी हरतादामूलमस्मदनुतापम् ॥१७॥
तत्र नभः श्रीमुख्यैस्तरुणीवर्गैः समन्वितः परितः ।
वज्राटहासमुखरो वाञ्छापूर्तिं तनोतु वर्षर्तुः ॥१८॥
मारुतयोजनदूरे महनीयस्तस्य चोत्तरे भागे ।
भद्रं कृषीष्ट षष्ठः प्राकारः पञ्चलोहधातुमयः ॥१९॥
अनयोर्मध्ये सन्ततमङ्कूरद्दिव्यकुसुमगन्धायाम् ।
मन्दारवाटिकायां मानसमङ्गीकरोतु मे विहृतिम् ॥२०॥
तस्यामिषोर्जलक्ष्मी-तरुणीभ्यां शरदृतुः सदा सहितः ।
अभ्यर्चयन् स जीयादम्बामामोदमेदुरैः कुसुमैः ॥२१॥
तस्यर्षिसङ्ख्ययोजनदूरे देदीप्यमानशृङ्गौघः ।
कलधौतकलितमूर्तिः कल्याणं दिशतु सप्तमः सालः ॥२२॥
मध्ये तयोर्मरुत्पथलङ्घित-विटपाग्रविरुतकलकण्ठा ।
श्रीपारिजातवाटी श्रियमनिशं दिशतु शीतलोद्देशा ॥२३॥
तस्यामतिप्रियाभ्यां सह खेलन् सहसहस्यलक्ष्मीभ्याम् ।
सामन्तो झषकेतोर्हेमन्तो भवतु हेमवृद्ध्यै नः ॥२४॥
उत्तरतस्तस्य महानुद्भटहुतभुक्शिखारुणमयूखः ।
तपनीयखण्डरचितस्तनुतादायुष्यमष्टमो वरणः ॥२५॥
कादम्बविपिनवाटीमनयोर्मध्यभुवि कल्पितावासाम् ।
कलयामि सूनकोरककन्दलितामोद-तुन्दिल-समीराम् ॥२६॥
तस्यामति-शिशिराकृतिरासीनस्तपतपस्यलक्ष्मीभ्याम् ।
शिवमनिशं कुरुतान्मे शिशिरर्तुः सततशीतलदिगन्तः ॥२७॥
तस्यां कदम्बवाट्यां तत्प्रसवामोद-मिलित-मधुगन्धम् ।
सप्तावरणमनोज्ञं शरणं समुपैमि मन्त्रिणी-शरणम् ॥२८॥
तत्रालये विशाले तपनीयारचित-तरल-सोपाने ।
माणिक्य-मण्डपान्तर्महिते सिंहासने सुमणिखचिते ॥२९॥
बिन्दु-त्रिपञ्च-कोण-द्विप-नृप-वसु-वेद-दल-कुरेखाढ्ये ।
चक्रे सदा निविष्टां षष्ठ्यष्टत्रिंशदक्षरेशानीम् ॥३०॥

तापिञ्छमेचकाभां तालीदलघटितकर्णताटङ्काम् ।
ताम्बूलपूरितमुखीं ताम्राधरबिम्बदृष्टदरहासाम् ॥३१॥
कुङ्कुमपङ्किलदेहां कुवलय-जीवातु-शावक-वतंसाम् ।
कोकनदशोणचरणां कोकिल-निक्वाण-कोमलालापाम् ॥३२॥
वामाङ्गगलित-चूलीं वनमाल्यकदम्बमालिकाभरणाम् ।
मुक्तालल्न्तिकाञ्चितमुग्धालिक-मिलित-चित्रकोदाराम् ॥३३॥

करविधृतकीरशावक-कल-निनद-व्यक्त-निखिल-निगमार्थाम् ।
वामकुचसङ्गिवीणावादनसौख्यार्धमीलिताक्षियुगाम् ॥३४॥
आपाटलांशुकधराम् आदिरसोन्मेषवासितकटाक्षाम् ।
आम्नायसारगुलिकाम् आद्यां सङ्गीतमातृकां वन्दे ॥३५॥
तस्य च सुवर्णसालस्योत्तरतस्तरुणकुङ्कुमच्छायः ।
शमयतु मम सन्तापं सालो नवमः स पुष्परागमयः ॥३६॥

अनयोरन्तरवसुधाः प्रणुमः प्रत्यग्रपुष्परागमयीः ।
सिंहासनेश्वरीमनुचिन्तन-निस्तन्द्र-सिद्धनीरन्ध्राः ॥३७॥
तत्सालोत्तरदेशे तरुणजपा-किरण-धोरणी-शोणः ।
प्रशमयतु पद्मरागप्राकारो मम पराभवं दशमः ॥३८॥
अन्तरभूकृतवासान् अनयोरपनीतचित्तवैमत्यान् ।
चक्रेशीपदभक्तांश्चारणवर्गानहर्निशं कलये ॥३९॥

सारङ्गवाहयोजनदूरेऽसङ्कटितकेतनस्तस्य ।
गोमेदकेन रचितो गोपायतु मां समुन्नतः सालः ॥४०॥
वप्रद्वयान्तरोर्व्यां वटकैर्विविधैश्च योगिनीवृन्दैः ।
सततं समर्चितायाः सङ्कर्षण्याः प्रणौमि चरणाब्जम् ॥४१॥
तापसयोजनदूरे तस्य समुत्तुङ्ग-गोपुरोपेतः ।
वाञ्छापूर्त्यै भवताद् वज्रमणी-निकर-निर्मितो वप्रः ॥४२॥

वरणद्वितयान्तरतो वासजुषो विहितमधुरसास्वादाः ।
रम्भादिविबुधवेश्या रचयन्तु महान्तमस्मदानन्दम् ॥४३॥
तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।
चटुलोर्मिजालनृत्यत् कलहंसीकुलकलक्वणितपुष्टा ॥४४॥

रोधसि तस्या रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।
वज्रप्रदानतोषितवज्रिमुखत्रिदश-विनुतचारित्रा ॥४५॥
तस्योदीच्यां हरिति स्तवकित-सुषमावलीढ-वियदन्तः ।
वैडूर्यरत्नरचितो वैमल्यं दिशतु चेतसो वरणः ॥४६॥

अधिमध्यमेतयोः पुनरम्बाचरणावलम्बितस्वान्तान् ।
कार्कोटकादिनागान् कलयामः किञ्च बलिमुखान् दनुजान् ॥४७॥
गन्धवहसङ्ख्य-योजनदूरे गगनोर्ध्वजाङ्घिकस्तस्य ।
वासवमणिप्रणीतो वरणो बहलयतु वैदुषीं विशदाम् ॥४८॥
मध्यक्षोण्यामनयोर्महेन्द्रनीलात्मकानि च सरांसि ।
शातोदरीसहायान् भूपालानपि पुनः पुनः प्रणुमः ॥४९॥
आशुगयोजनदूरे तस्योर्ध्वं कान्तिधवलितदिगन्तः ।
मुक्ताविरचितगात्रो मुहुरस्माकं मुदे भवतु सालः ॥५०॥
आवृत्त्योरधिमध्यं पूर्वस्यां दिशि पुरन्दरः श्रीमान् ।
अभ्रमुविटाधिरूढो विभ्रममस्माकमनिशमातनुतात् ॥५१॥
तत्कोणे व्यजनस्रुक्तोमरपात्रस्रुवान्नशक्तिधरः ।
स्वाहास्वधासमेतः सुखयतु मां हव्यवाहनः सुचिरम् ॥५२॥
दक्षिणदिगन्तराले दण्डधरो नीलनीरदच्छायः ।
त्रिपुरापदाब्जभक्तस्तिरयतु मम निखिलमंहसां निकरम् ॥५३॥
तस्यैव पश्चिमायां दिशि दलितेन्दीवरप्रभाश्यामः ।
खेटासियष्टिधारी खेदानपनयतु यातुधानो मे ॥५४॥
तस्या उत्तरदेशे धवलाङ्गो विपुलझषवरारूढः ।
पाशायुधात्तपाणिः पाशी विदलयतु पाशजालानि ॥५५॥
वन्दे तदुत्तरहरित्कोणे वायुं चमूरुवरवाहम् ।
कोरकित-तत्त्वबोधान् गोरक्षप्रमुखयोगिनोऽपि मुहुः ॥५६॥
तरुणीरिडाप्रधानास्तिस्रो वातस्य तस्य कृतवासाः ।
प्रत्यग्रकापिशायनपान-परिभ्रान्त-लोचनाः कलये ॥५७॥
तल्लोकपूर्वभागे धनदं ध्यायामि शेवधिकुलेशम् ।
अपि माणिभद्रमुख्यानम्बाचरणावलम्बिनो यक्षान् ॥५८॥
तस्यैव पूर्वसीमनि तपनीयारचितगोपुरे नगरे ।
कात्यायनीसहायं कलये शीतांशुखण्डचूडालम् ॥५९॥
तत्पुरषोडशवरणस्थलभाजस्तरुणचन्द्रचूडालान् ।
रुद्राध्याये पठितान् रुद्राणीसहचरान् भजे रुद्रान् ॥६०॥
पवमानसङ्ख्ययोजनदूरे बालतृणमेचकस्तस्य ।
सालो मरकतरचितः सम्पदमचलां श्रियं च पुष्णातु ॥६१॥
आवृतियुग्मान्तरतो हरितमणी-निवहमेचके देशे ।
हाटक-ताली-विपिनं हालाघटघटित-विटपमाकलये ॥६२॥

तत्रैव मन्त्रिणीगृह-परिणाहं तरलकेतनं सदनम् ।
मरकत-सौध-मनोज्ञं दद्यादायूंषि दण्डनाथायाः ॥६३॥
सदने तत्र हरिन्मणिसङ्घटिते मण्डपे शतस्तम्भे ।
कार्त्तस्वरमयपीठे कनकमयाम्बुरुहकर्णिकामध्ये ॥६४॥
बिन्दुत्रिकोणवर्तुलषडस्रवृत्तद्वयान्विते चक्रे ।
सञ्चारिणी दशोत्तरशतार्ण-मनुराज-कमल-कलहंसी ॥६५॥
कोलवदना कुशेशयनयना कोकारिमण्डितशिखण्डा ।
सन्तप्त-काञ्चनाभा सन्ध्यारुण-चेल-संवृत-नितम्बा ॥६६॥
हलमुसलशङ्खचक्राङ्कुशपाशाभयवरस्फुरितहस्ता ।
कूलङ्कषानुकम्पा कुङ्कुमजम्बालितस्तनाभोगा ॥६७॥
धूर्तानामतिदूरावार्ताशेषावलग्नकमनीया ।
आर्त्तालीशुभदात्री वार्ताली भवतु वाञ्छितार्थाय ॥६८॥
तस्याः परितो देवीः स्वप्नेश्युन्मत्तभैरवी-मुख्याः ।
प्रणमत जम्भिन्याद्या भैरववर्गांश्च हेतुकप्रमुखान् ॥६९॥
पूर्वोक्तसङ्ख्ययोजनदूरे पूयांशुपाटलस्तस्य ।
विद्रावयतु मदार्तिं विद्रुमसालो विशङ्कटद्वारः ॥७०॥
आवरणयोरहर्निशमन्तरभूमौ प्रकाशशालिन्याम् ।
आसीनमम्बुजासनमभिनवसिन्दूरगौरमहमीडे ॥७१॥
वरणस्य तस्य मारुतयोजनतो विपुलगोपुरद्वारः ।
सालो नानारत्नैः सङ्घटिताङ्गः कृषीष्ट मदभीष्टम् ॥७२॥
अन्तरकक्ष्यामनयोरविरलशोभापिचण्डिलोद्देशाम् ।
माणिक्यमण्डपाख्यां महतीमधिहृदयमनिशमाकलये ॥७३॥
तत्र स्थितं प्रसन्नं तरुणतमालप्रवालकिरणाभम् ।
कर्णावलम्बिकुण्डलकन्दलिताभीशुकवचितकपोलम् ॥७४॥
शोणाधरं शुचिस्मितमेणाङ्कवदनमेधमानकृपम् ।
मुग्धैणमदविशेषकमुद्रितनिटिलेन्दुरेखिकारुचिरम् ॥७५॥
नालीकदलसहोदरनयनाञ्चलघटितमनसिजाकूतम् ।
कमलाकठिनपयोधरकस्तूरी-घुसृणपङ्किलोरस्कम् ॥७६॥
चाम्पेयगन्धिकैश्यं शम्पासब्रह्मचारिकौशेयम् ।
श्रीवत्सकौस्तुभधरं श्रितजनरक्षाधुरीणचरणाब्जम् ॥७७॥
कम्बुसुदर्शनविलसत्-करपद्मं कण्ठलोलवनमालम् ।
मुचुकुन्दमोक्षफलदं मुकुन्दमानन्दकन्दमवलम्बे ॥७८॥

तद्वरणोत्तरभागे तारापति-बिम्बचुम्बिनिजशृङ्गः ।
विविधमणीगण-घटितो वितरतु सालो विनिर्मलां धिषणाम् ॥७९॥
प्राकारद्वितयान्तरकक्ष्यां पृथुरत्ननिकर-सङ्कीर्णाम् ।
नमत सहस्रस्तम्भकमण्डपनाम्नातिविश्रुतां भुवने ॥८०॥

प्रणुमस्तत्र भवानीसहचरमीशानमिन्दुखण्डधरम् ।
शृङ्गारनायिकामनुशीलनभाजोऽपि भृङ्गिनन्दिमुखान् ॥८१॥
तस्यैणवाहयोजनदूरे वन्दे मनोमयं वप्रम् ।
अङ्कूरन्मणिकिरणामन्तरकक्ष्यां च निर्मलामनयोः ॥८२॥

तत्रैवामृतवापीं तरलतरङ्गावलीढतटयुग्माम् ।
मुक्तामय-कलहंसी-मुद्रित-कनकारविन्दसन्दोहाम् ॥८३॥
शक्रोपलमयभृङ्गीसङ्गीतोन्मेषघोषितदिगन्ताम् ।
काञ्चनमयाङ्गविलसत्कारण्डवषण्ड-ताण्डवमनोज्ञाम् ॥८४॥
कुरुविन्दात्म-कह्लक-कोरक-सुषमा-समूह-पाटलिताम् ।
कलये सुधास्वरूपां कन्दलितामन्दकैरवामोदाम् ॥८५॥
तद्वापिकान्तराले तरले मणिपोतसीम्नि विहरन्तीम् ।
सिन्दूर-पाटलाङ्गीं सितकिरणाङ्कूरकल्पितवतंसाम् ॥८६॥
पर्वेन्दुबिम्बवदनां पल्लवशोणाधरस्फुरितहासाम् ।
कुटिलकबरीं कुरङ्गीशिशुनयनां कुण्डलस्फुरितगण्डाम् ॥८७॥
निकटस्थपोतनिलयाः शक्तीः शयविधृतहेमशृङ्गजलैः ।
परिषिञ्चन्तीं परितस्तारां तारुण्यगर्वितां वन्दे ॥८८॥
प्रागुक्तसङ्ख्ययोजनदूरे प्रणमामि बुद्धिमयसालम् ।
अनयोरन्तरकक्ष्यामष्टापदपुष्टमेदिनीं रुचिराम् ॥८९॥
कादम्बरीनिधानां कलयाम्यानन्दवापिकां तस्याम् ।
शोणाश्मनिवहनिर्मितसोपानश्रेणिशोभमानतटीम् ॥९०॥

माणिक्यतरणिनिलयां मध्ये तस्या मदारुणकपोलाम् ।
अमृतेशीत्यभिधानामन्तः कलयामि वारुणीं देवीम् ॥९१॥
सौवर्णकेनिपातनहस्ताः सौन्दर्यगर्विता देव्यः ।
तत्पुरतः स्थितिभाजो वितरन्त्वस्माकमायुषो वृद्धिम् ॥९२॥

तस्य पृषदश्वयोजनदूरेऽहङ्कारसालमतितुङ्गम् ।
वन्दे तयोश्च मध्ये कक्ष्यां वलमानमलयपवमानाम् ॥९३॥
विनुमो विमर्शवापीं सौषुम्नसुधास्वरूपिणीं तत्र ।
वेलातिलङ्घिवीचीकोलाहलभरितकूलवनवाटीम् ॥९४॥

तत्रैव सलिलमध्ये तापिच्छदलप्रपञ्चसुषमाभाम् ।
श्यामलकञ्चुकलसितां श्यामा-विटबिम्बडम्बरहरास्याम् ॥९५॥

आभुग्नमसृणचिल्लीहसितायुग्मशरकार्मुकविलासाम् ।
मन्दस्मिताञ्चितमुखीं मणिमयताटङ्कमण्डित-कपोलाम् ॥९६॥

कुरुविन्दतरणिनिलयां कुलाचलस्पर्धिकुचनमन्मध्याम् ।
कुङ्कुमविलिप्तगात्रीं कुरुकुल्लां मनसि कुर्महे सततम् ॥९७॥

तत्सालोत्तरभागे भानुमयं वप्रमाश्रये दीप्रम् ।
मध्यं च विपुलमनयोर्मन्ये विश्रान्तमातपोद्गारम् ॥९८॥

तत्र कुरुविन्दपीठे तामरसे कनककर्णिकाघटिते ।
आसीनमरुणवाससमम्लानप्रसवमालिकाभरणम् ॥९९॥

चक्षुष्मतीप्रकाशनशक्तिच्छाया-समारचितकेलिम् ।
माणिक्यमुकुटरम्यं मन्ये मार्तण्डभैरवं हृदये ॥१००॥

इन्दुमयसालमीडे तस्योत्तरतस्तुषारगिरिगौरम् ।
अत्यन्त-शिशिरमारुतमनयोर्मध्यं च चन्द्रिकोद्गारम् ॥१०१॥

तत्र प्रकाशमानं तारानिकरैः परिष्कृतोद्देशम् ।
अमृतमयकान्तिकन्दलमन्तः कलयामि कुन्दमितमिन्दुम् ॥१०२॥

शृङ्गारसालमीडे शृङ्गोल्लसितं तदुत्तरे भागे ।
मध्यस्थले तयोरपि महितां शृङ्गारपूर्विकां परिखाम् ॥१०३॥

तत्र मणिनौस्थिताभिस्तपनीयाविरचिताग्रहस्ताभिः ।
शृङ्गारदेवताभिः सहितं परिखाधिपं भजे मदनम् ॥१०४॥

शृङ्गारवरणवप्रस्योत्तरतः सकलविबुधसंसेव्यम् ।
चिन्तामणिगणरचितं चिन्तां दूरीकरोतु मे सदनम् ॥१०५॥

मणिमदनसालयोरधिमध्यं दशतालभूमिरुहदीर्घैः ।
पर्णैः सुवर्णवर्णैर्युक्तां काण्डैश्च योजनोत्तुङ्गैः ॥१०६॥

मृदुलैस्तालीपञ्चकमानैर्मिलितां च केसरकदम्बैः ।
सन्ततगलितमरन्दस्रोतोनिर्यन्मिलिन्दसन्दोहाम् ॥१०७॥

पाटीरपवनबालकधाटीनिर्यत्परागपिञ्जरिताम् ।
कलहंसीकुलकलकलकूलङ्कषनिनदनिचयकमनीयाम् ॥१०८॥

पद्माटवीं भजामः परिमलकल्लोलपक्ष्मलोपान्ताम् ॥
देव्यर्घ्यपात्रधारी तस्याः पूर्वदिशि दशकलायुक्तः ।
वलयितमूर्तिर्भगवान् वह्निः क्रोशोन्नतश्चिरं पायात् ॥१०९॥

तत्राधारे देव्याः पात्रीरूपः प्रभाकरः श्रीमान् ।
द्वादशकलासमेतो ध्वान्तं मम बहलमान्तरं भिन्द्यात् ॥११०॥
तस्मिन् दिनेशपात्रे तरङ्गितामोदममृतमयमर्घ्यम् ।
चन्द्रकलात्मकममृतं सान्द्रीकुर्यादमन्दमानन्दम् ॥१११॥

अमृते तस्मिन्नभितो विहरन्त्यो विविधमणितरणिभाजः ।
षोडश कलाः सुधांशोः शोकादुत्तारयन्तु मामनिशम् ॥११२॥
तत्रैव विहृतिभाजो धातृमुखानां च कारणेशानाम् ।
सृष्ट्यादिरूपिकास्ताः शमयन्त्वखिलाः कलाश्च सन्तापम् ॥११३॥

कीनाशवरुणकिन्नरराजदिगन्तेषु रत्नगेहस्य ।
कलयामि तान्यजस्रं कलयन्त्वायुष्यमर्घ्यपात्राणि ॥११४॥
पात्रस्थलस्य पुरतः पद्मारमणविधिपार्वतीशानाम् ।
भवनानि शर्मणे नो भवन्तु भासा प्रदीपितजगन्ति ॥११५॥

सदनस्यानलकोणे सततं प्रणमामि कुण्डमाग्नेयम् ।
तत्र स्थितं च वह्निं तरलशिखाजटिलमम्बिकाजनकम् ॥११६॥
तस्यासुरदिशि तादृशरत्नपरिस्फुरितपर्वनवकाढ्यम् ।
चक्रात्मकं शताङ्गं शतयोजनमुन्नतं भजे दिव्यम् ॥११७॥

तत्राग्नि(तत्रैव)दिशि निषण्णं तपनीयध्वजपरम्पराश्लिष्टम् ।
रथमपरं च भवान्या रचयामो मनसि रत्नमयचूडम् ॥११८॥
भवनस्य वायुभागे परिष्कृतो विविधवैजयन्तीभिः ।
रचयतु मुदं रथेन्द्रः सचिवेशान्याः समस्तवन्द्यायाः ॥११९॥

कुर्मोऽधिहृदयमनिशं क्रोडास्यायाः शताङ्गमूर्धन्यम् ।
रुद्रदिशि रत्नधाम्नो रुचिरशलाकाप्रपञ्चकञ्चुकितम् ॥१२०॥
परितो देवीधाम्नः प्रणीतवासा मनुस्वरूपिण्यः ।
कुर्वन्तु रश्मिमालाकृतयः कुशलानि देवता निखिलाः ॥१२१॥
प्राग्द्वारस्य भवानीधाम्नः पार्श्वद्वयारचितवासे ।
मातङ्गीकिटिमुख्यौ मणिसदने मनसि भावयामि चिरम् ॥१२२॥

योजनयुगलाभोगा तत्क्रोशपरिणाहयैव भित्त्या च ।
चिन्तामणिगृह-भूमिर्जीयादाम्नायमयचतुर्द्वारा ॥१२३॥
द्वारे द्वारे धाम्नः पिण्डीभूता नवीनबिम्बाभाः ।
विदधतु विपुलां कीर्तिं दिव्या लौहित्यसिद्धयो देव्यः ॥१२४॥
मणिसदनस्यान्तरतो महनीये रत्नवेदिकामध्ये ।
बिन्दुमयचक्रमीडे पीठानामुपरि विरचितावासम् ॥१२५॥

चक्राणां सकलानां प्रथममधः सीमफलकवास्तव्याः ।
अणिमादिसिद्धयो मामवन्तु देवीप्रभास्वरूपिण्यः ।।१२६।।
अणिमादिसिद्धिफलकस्योपरिहरिणाङ्कखण्डकृतचूडाः ।
भद्रं पक्ष्मलयन्तु ब्राह्मीप्रमुखाश्च मातरोऽस्माकम् ।।१२७।।

तस्योपरि मणिफलके तारुण्योत्तुङ्गपीनकुचभाराः ।
सङ्क्षोभिणीप्रधानाः भ्रान्तिं विद्रावयन्तु दश मुद्राः ।।१२८।।
फलकत्रयस्वरूपे पृथुले त्रैलोक्यमोहने चक्रे ।
दीव्यन्तु प्रकटाख्यास्तासां कर्त्री च भगवती त्रिपुरा ।।१२९।।

तदुपरि विपुले धिष्ण्ये तरलदृशस्तरुणकोकनदभासः ।
कामाकर्षिण्याद्याः कलये देवीः कलाधरशिखण्डाः ।।१३०।।
सर्वाशापरिपूरकचक्रेऽस्मिन् गुप्तयोगिनीसेव्या ।
त्रिपुरेशी मम दुरितं तुद्यात् कण्ठावलम्बिमणिहारा ।।१३१।।

तस्योपरि मणिपीठे ताम्राम्भोरुहदलप्रभाशोणाः ।
ध्यायाम्यनङ्गकुसुमाप्रमुखा देवीश्च विधृतकूर्पासाः ।।१३२।।
सङ्क्षोभकारकेऽस्मिश्चक्रे श्रीत्रिपुरसुन्दरी साक्षात् ।
गोप्त्री गुप्ततराख्या गोपायतु मां कृपार्द्रया दृष्ट्या ।।१३३।।

सङ्क्षोभिणीप्रधानाः शक्तीस्तस्योर्ध्ववलयकृतवासाः ।
आलोलनीलवेणीरन्तः कलयामि यौवनोन्मत्ताः ।।१३४।।
सौभाग्यदायकेऽस्मिँश्चक्रेशी त्रिपुरवासिनी जीयात् ।
शक्तीश्च सम्प्रदायाभिधाः समस्ताः प्रमोदयन्त्वनिशम् ।।१३५।।

मणिपीठोपरि तासां महति चतुर्हस्तविस्तृते वलये ।
सन्ततविरचितवासाः शक्तीः कलयामि सर्वसिद्धिमुखाः ।।१३६।।
सर्वार्थसाधकाख्ये चक्रेऽमुष्मिन् समस्तफलदात्री ।
त्रिपुरा श्रीर्मम कुशलं दिशतादुत्तीर्णयोगिनीसेव्या ।।१३७।।
तासां निलयस्योपरि धिष्ण्ये कौसुम्भकञ्चुकमनोज्ञाः ।
सर्वाज्ञाद्याः देव्यः सकलाः सम्पादयन्तु मम कीर्तिम् ।।१३८।।

चक्रे समस्तरक्षाकरनाम्न्यस्मिन् समस्तजनसेव्याम् ।
मनसि निगर्भासहितां मन्ये श्रीत्रिपुरमालिनीं देवीम् ।।१३९।।
सर्वाज्ञासदनस्योपरि चक्रे विपुले समाकलितगेहाः ।
वन्दे वशिनीमुख्याः शक्तीः सिन्दूररेणुरुचः ।।१४०।।
श्रीसर्वरोगहराख्यचक्रेऽस्मिँस्त्रिपुरपूर्विकां सिद्धाम् ।
वन्दे रहस्यनाम्ना वेद्याभिः शक्तिभिः सदा सेव्याम् ।।१४१।।

वशिनीगृहोपरिष्टाद् विंशतिहस्तोन्नते महापीठे ।
शमयन्तु शत्रुवृन्दं शस्त्राण्यस्त्राणि चादिदम्पत्योः ॥१४२॥
शस्त्रसदनोपरिष्टाद् वलये बलवैरिरत्नसङ्घटिते ।
कामेश्वरीप्रधानाः कलये देवीः समस्तजनवन्द्याः ॥१४३॥

चक्रेऽत्र सर्वसिद्धिप्रदनामनि सर्वफलदात्री ।
त्रिपुराम्बावतु सततं परापररहस्ययोगिनीसेव्या ॥१४४॥
कामेश्वरीगृहोपरिवलये विविधमनुसम्प्रदायज्ञाः ।
चत्वारो युगनाथा जयन्तु मित्रेशपूर्वकाः गुरवः ॥१४५॥

नाथभवनोपरिष्टान्नानारत्नचयमेदुरे पीठे ।
कामेश्याद्या नित्याः कलयन्तु मुदं तिथिस्वरूपिण्यः ॥१४६॥
नित्यासदनस्योपरि निर्मलमणिनिवहविरचिते धिष्ण्ये ।
कुशलं षडङ्गदेव्यः कलयन्त्वस्माकमुत्तरलनेत्राः ॥१४७॥

सदनस्योपरि तासां सर्वानन्दमयनामके विन्दौ ।
पञ्च ब्रह्माकारं मञ्चं प्रणमामि मणिगणाकीर्णम् ॥१४८॥
परितो मणिमञ्चस्य प्रलम्बमाना नियन्त्रिता पाशैः ।
मायामयी जवनिका मम दुरितं हरतु मेचकच्छाया ॥१४९॥

मञ्चस्योपरि लम्बन्मदनीपुन्नागमालिकाभरितम् ।
हरिगोपमयवितानं हरतादालस्यमनिशमस्माकम् ॥१५०॥
पर्यङ्कस्य भजामः पादान् विम्वाम्बुदेन्दुहेमरुचः ।
अजहरिरुद्रेशमयाननलासुरमारुतेशकोणस्थान् ॥१५१॥

फलकं सदाशिवमयं प्रणौमि सिन्दूररेणुकिरणाभम् ।
आरभ्याङ्गेशीनां सदनात् कलितं च रत्नसोपानम् ॥१५२॥
पट्टोपधानगण्डकचतुष्टयस्फुरितपाटलास्तरणम् ।
पर्यङ्कोपरि घटितं पातु चिरं हंसतूलशयनं नः ॥१५३॥

तस्योपरि निवसन्तं तारुण्यश्रीनिषेवितं सततम् ।
आवृन्तफुल्लहल्लकमरीचिकापुञ्जमञ्जुलच्छायम् ॥१५४॥
सिन्दूरशोणवसनं शीतांशुस्तवकचुम्बितकिरीटम् ।
कुङ्कुमतिलकमनोहरकुटिलालिकहसितकुमुदबन्धुशिशुम् ॥१५५॥
पूर्णेन्दुबिम्बवदनं फुल्लसरोजातलोचनत्रितयम् ।
तरलापाङ्गतरङ्गितशफराङ्कनशास्त्रसम्प्रदायार्थम् ॥१५६॥
मणिमयकुण्डलपुष्यन्मरीचिकल्लोलमांसलकपोलम् ।
विद्रुमसहोदराधरविसृमर-मृस्मित-किशोरसञ्चारम् ॥१५७॥

आमोदिकुसुमशेखरमानीलभ्रूलतायुगमनोज्ञम् ।
वीटीसौरभवीचीद्विगुणितवक्त्रारविन्दसौरभ्यम् ॥१५८॥
पाशाङ्कुशेक्षुचापप्रसवशरस्फुरितकोमलकराब्जम् ।
काश्मीरपङ्किलाङ्गं कामेशं मनसि कुर्महे सततम् ॥१५९॥

तस्याङ्कभुवि निषण्णां तरुणकदम्बप्रसूनकिरणाभाम् ।
शीतांशुखण्डचूडां सीमन्तन्यस्तसान्द्रसिन्दूराम् ॥१६०॥
कुङ्कुमललामभास्वन्निटिलां कुटिलतरचिल्लिकायुगलाम् ।
नालीकतुल्यनयनां नासाञ्चलनर्टितमौक्तिकाभरणाम् ॥१६१॥

अङ्कुरितमन्दहासामरुणाधरकान्तिविजितबिम्बाभाम् ।
कस्तूरीमकरीयुतकपोलसङ्क्रान्तकनकताटङ्काम् ॥१६२॥
कर्पूरसान्द्रवीटीकवलितवदनारविन्दकमनीयाम् ।
कम्बुसहोदरकण्ठप्रलम्बमानाच्छमौक्तिककलापाम् ॥१६३॥

कह्लारदामकोमलभुजयुगलस्फुरितरत्नकेयूराम् ।
करपद्ममूलविलसत् काञ्चनमयकटकवलयसन्दोहाम् ॥१६४॥
पाणिचतुष्टयविलसत् पाशाङ्कुशपुण्ड्रचापपुष्पास्त्राम् ।
कूलङ्कषकुचशिखरां कुङ्कुमकर्दमितरत्नकूर्पासाम् ॥१६५॥
अणुदायादवलग्नामम्बुदशोभासनाभि-रोमलताम् ।
माणिक्यखचितकाञ्चीमरीचिकाक्रान्तमांसलनितम्बाम् ॥१६६॥
करभोरुकाण्डयुगलां जङ्घाजितकामजैत्रतूणीराम् ।
प्रपदपरिभूतकूर्मामुत्तरलापाङ्गपोषितानङ्गाम् ॥१६७॥

कमलभवकञ्जलोचनकिरीटरत्नांशुरञ्जितपदाब्जाम् ।
उन्मस्तकानुकम्पामुत्तरलापाङ्गपोषितानङ्गाम ॥१६८॥
आदिमरसावलम्बामनिदम्प्रथमोक्तिवल्लरीकलिकाम् ।
आब्रह्मकीटजननीमन्तः कलयामि सुन्दरीमनिशम् ॥१६९॥

कस्तु क्षितौ पटीयान् वस्तुस्तोतुं शिवाङ्कवास्तव्यम् ।
अस्तु चिरन्तनसुकृतैः प्रस्तुतकाम्याय तन्मम पुरस्तात् ॥१७०॥
प्रभुसम्मितोक्तिगम्यं परमशिवोत्सङ्गतुङ्गपर्यङ्कम् ।
तेजः किञ्चन दिव्यं पुरतो मे भवतु पुण्ड्रकोदण्डम् ॥१७१॥

मधुरिमभरितशरासं मकरन्दस्यन्दिमार्गणोदारम् ।
कैरविणीविटचूडं कैवल्यायास्तु किञ्चन महो नः ॥१७२॥
अक्षुद्रमिक्षुचापं परोक्षमवलग्नसीमनि त्र्यक्षम् ।
क्षपयतु मे क्षेमेतरमुक्षरथप्रेमपक्ष्मलं तेजः ॥१७३॥

भृङ्गरुचिसङ्गरकरापाङ्गं शृङ्गारतुङ्गमरुणाङ्गम् ।
मङ्गलमभङ्गुरं मे घटयतु गङ्गाधराङ्गसङ्गि महः ॥१७४॥

प्रपदजितकूर्ममूर्जितकरुणं भर्मरुचिनिमथनदेहम् ।
श्रितवर्म मर्म शम्भोः किञ्चन मम नर्म शर्म निर्मातु ॥१७५॥

कालकुरलालिकालिमकन्दलविजितालि विधृतमणिवालि ।
मिलतु हृदि पुलिनजघनं बहुलितगलगरलकेलि किमपि महः ॥१७६॥

कुङ्कुमतिलकितभाला कुरुविन्दच्छायपाटलदुकूला ।
करुणापयोधिवेला काचन चित्ते चकास्तु मे लीला ॥१७७॥

पुष्पन्धयरुचिवेण्यः पुलिनाभोगत्रपाकरश्रोण्यः ।
जीयासुरिक्षुपाण्यः काश्चन कामारिकेलिसाक्षिण्यः ॥१७८॥

तपनीयांशुकभांसि द्राक्षामाधुर्यनास्तिकवचांसि ।
कतिचन शुचं महांसि क्षपयन्तु कपालितोषितमनांसि ॥१७९॥

असितकचमायताक्षं कुसुमशरं कूलमुद्वहत्कृपार्द्रम् ।
आदिमरसाधिदैवतमन्तः कलये हराङ्कवासि महः ॥१८०॥

कर्णोपान्ततरङ्गितकटाक्षविस्पन्दिकण्ठदघ्नकृपाम् ।
कामेश्वराङ्कनिलयां कामपि विद्यां पुरातनीं कलये ॥१८१॥

अरविन्दकान्त्यरुन्तुदविलोचनद्वन्द्वसुन्दरमुखेन्दु ।
छन्दः कन्दलमन्दिरमन्तःपुरमैन्दुशेखरं वन्दे ॥१८२॥

बिम्बनिकुरम्बडम्बरविडम्बकच्छायमम्बरवलग्नम् ।
कम्बुगलमम्बुदकचं बिब्बोकं कमपि चुम्बतु मनो मे ॥१८३॥

किमपि कमनीयरूपं कलयाम्यन्तः कदम्बकुसुमाढ्यम् ।
चम्पकरुचिरसुवेषैः सम्पादितकान्त्यलङ्कृतदिगन्तम् ॥१८४॥

शम्पारुचिभरगर्हासम्पादककान्तिकवचितदिगन्तम् ।
सिद्धान्तं निगमानां शुद्धान्तं किमपि शूलिनः कलये ॥१८५॥

उद्यद्दिनकरशोणानुत्पलबन्धुस्तनन्धयापीडान् ।
करकलितपुण्ड्रचापान् कलये कानपि कपर्दिनः प्राणान् ॥१८६॥

रशनालसज्जघनया रसनाजीवातु-चापभासुरया ।
घ्राणायुष्करशरया घ्रातं चित्तं कयापि वामनया ॥१८७॥

सरसिजसहयुग्वदृशा शम्पालतिकासनाभिविग्रहया ।
भामा कयापि चेतो नामामणिशोभिवदनया भग्नम् ॥१८८॥

नवयावकाभसिचयान्विनया गजयानया दयापरया ।
धृतयामिनीशकलया धिया कयापि क्षतामया हि वयम् ॥१८९॥

अलमलमकुसुमबाणैरबिम्बशोणैरपुण्ड्रकोदण्डैः ।
अकुमुदबान्धवचूडैरन्यैरिह जगति दैवतम्मन्यैः ॥१९०॥
कुवलयसदृक्षनयनैः कुलगिरिकूटस्थबन्धुकुचभारैः ।
करुणास्पन्दिकटाक्षैः कवचितचित्तोऽस्मि कतिपयैः कुतुकैः ॥१९१॥

नतजनसुलभाय नमो नालीकसनाभिलोचनाय नमः ।
नन्दितगिरिशाय नमो महसे नवनीपपाटलाय नमः ॥१९२॥
कादम्बकुसुमदाम्ने कायच्छायाकणायितार्यम्णे ।
सीम्ने चिरन्तनगिरां भूम्ने कस्मैचिदाददे प्रणतिम् ॥१९३॥

कुटिलकबरीभरेभ्यः कुङ्कुमसब्रह्मचारिकिरणेभ्यः ।
कूलङ्कषस्तनेभ्यः कुर्मः प्रणतिं कुलाद्रिकुतुकेभ्यः ॥१९४॥
कोकनदशोणचरणात् कोमलकुरलालिविजितशैवालात् ।
उत्पलसगन्धिनयनादुररीकुर्मो न देवतामन्याम् ॥१९५॥

आपाटलाधराणामानीलस्निग्धबर्बरकचानाम् ।
आम्नायजीवनानामाकूतानां हरस्य दासोऽहम् ॥१९६॥
पुङ्खितविलासहासस्फुरितासु पुराहिताङ्कनिलयासु ।
मग्नं मनो मदीयं कास्वपि कामारिजीवनाडीषु ॥१९७॥

ललिता पातु शिरो मे ललाटमम्बा च मधुमतीरूपा ।
भ्रूयुग्मं च भवानी पुष्पशरा पातु लोचनद्वन्द्वम् ॥१९८॥
पायान्नासां बाला सुभगा दन्तांश्च सुन्दरी जिह्वाम् ।
अधरोष्ठमादिशक्तिश्चक्रेशी पातु मे चिरं चिबुकम् ॥१९९॥
कामेश्वरी च कर्णौ कामाक्षी पातु गण्डयोर्युगलम् ।
शृङ्गारनायिकाव्याद् वदनं सिंहासनेश्वरी च गलम् ॥२००॥
स्कन्दप्रसूश्च पातु स्कन्धौ बाहू च पाटलाङ्गी मे ।
पाणी च पद्मनिलया पायादनिशं नखावलीर्विजया ॥२०१॥
कोदण्डिनी च वक्षः कुक्षिं चाव्यात् कुलाचलतनूजा ।
कल्याणी च वलग्नं कटिं च पायात् कलाधरशिखण्डा ॥२०२॥
ऊरुद्वयं च पायादुमा मृडानी च जानुनी रक्षेत् ।
जङ्घे च षोडशी मे पायात् पादौ च पाशसृणिहस्ता ॥२०३॥
प्रातः पातु परा मां मध्याह्ने पातु मणिगृहाधीशा ।
शर्वाण्यवतु च सायं पायाद्रात्रौ च भैरवी साक्षात् ॥२०४॥
भार्यां रक्षतु गौरी पायात् पुत्रांश्च बिन्दुगृहपीठा ।
श्रीविद्या च यशो मे शीलं चाव्याच्चिरं महाराज्ञी ॥२०५॥

पवनमयि पावकमयि क्षोणीमयि गगनमयि कृपीटमयि ।
रविमयि शशिमयि दिङ्मयि समयमयि प्राणमयि शिवे पाहि ।।२०६।
कालि कपालिनि शूलिनि भैरवि मातङ्गि पञ्चमि त्रिपुरे ।
वाग्देवि विन्ध्यवासिनि बाले भुवनेशि पालय चिरं माम् ।।२०७।।
अभिनवसिन्दूराभामम्ब त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषामुत्पलनयनाकटाक्षकल्लोलाः ।।२०८।।
वर्गाष्टकमिलिताभिर्वशिनीमुख्याभिरावृतां भवतीम् ।
चिन्तयतां सितवर्णां वाचो निर्यान्त्ययत्नतो वदनात् ।।२०९।।
कनकशलाकागौरीं कर्णव्यालोलकुण्डलद्वितयाम् ।
प्रहसितमुखीं च भवतीं ध्यायन्तो ये त एव भूधनदाः ।।२१०।।
शीर्षाम्भोरुहमध्ये शीतलपीयूषवर्षिणीं भवतीम् ।
अनुदिनमनुचिन्तयतामायुष्यं भवति पुष्कलमवन्याम् ।।२११।।
मधुरस्मितां मदारुणनयनां मातङ्गकुम्भवक्षोजाम् ।
चन्द्रावतंसिनीं त्वां सविधे पश्यन्ति सुकृतिनः केचित् ।।२१२।।
ललितायाः स्तवरत्नं ललितपदाभिः प्रणीतमार्याभिः ।
प्रतिदिनमवनौ पठतां फलानि वक्तुं प्रगल्भते सैव ।।२१३।।
सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ।।२१४।।

**इति श्रीभगवता दुर्वाससा विरचितं ललितास्तवरत्नं समाप्तम् ।**

---

* **अन्नदाकल्पतंत्रम्** । हिन्दी टीका सहित । एस. एन. खण्डेलवाल
* **एकजटातारासाधनतन्त्रम्** । हिन्दी टीका सहित । एस. एन. खण्डेलवाल
* **कामकला विलासः** । 'सरोजिनी' हिन्दी सहित । श्यामकान्त द्विवेदी
* **कुलार्णव तन्त्रम्** । हिन्दी टीका सहित । परमहंस मिश्र
* **तन्त्रालोक** । संस्कृत टीका एव राधेश्याम चतुर्वेदी कृत हिन्दी टीका
* **त्रिपुरा रहस्यम्** । ज्ञानखण्ड एवं महात्म्यखण्ड ।
  डॉ॰ जगदीश चन्द्र मिश्र कृत हिन्दी अनुवाद सहित ।
* **नीलसरस्वती-तन्त्रम्** । एस॰ एन॰ खण्डेलवाल कृत हिन्दी टीका ।
* **भूतडामरतन्त्रम्** । एस॰ एन॰ खण्डेलवाल कृत हिन्दी टीका ।
* **मन्त्रमहोदधि** । हिन्दी व्याख्या सहित । व्याख्याकार-डॉ॰ सुधाकर मालवीय
* **रूद्रयामलतन्त्र** । हिन्दी टीका सहित । टीकाकार–सुधाकर मालवीय
* **ललितासहस्त्रनाम** । श्रीभारतभूषण कृत विस्तृत हिन्दी व्याख्या सहित ।
* **विद्यावरिस्या** । संस्कृत हिन्दी टीका । श्यामाकान्त द्विवेदी 'आनन्द'
* **शारदातिलकम्** । संस्कृत टीका एवं हिन्दी टीका सहित । 1-2 भाग
* **सर्वोल्लास-तन्त्र** । हिन्दी-टीका सहित । टीकाकार एस. एन. खण्डेलवाल
* **सिद्धनागार्जुनतन्त्रम्** । एस. एन. खण्डेलवाल कृत हिन्दी टीका
* **सौन्दर्यलहरी** । 'लक्ष्मीधरी' संस्कृत एवं 'सरला' हिन्दी व्याख्या ।
  सुधाकर मालवीय

**चौखम्बा संस्कृत प्रतिष्ठान**
दिल्ली